ॐ

# ईशावास्योपनिषत् ।

प्रकाशिकासमेता ।

पं. श्रीधरशास्त्री पाठक

१८४३

ॐ

# ईशावास्योपनिषत् ।

श्रीकूरनारायणकृतप्रकाशिकया

समेता

पं. श्रीधरशास्त्री पाठक

संस्कृताध्यापक डेक्कन कॉलेज

इत्येतैः

स्वनिर्मितया बालबोधिन्या समलंकृता



पुण्यपत्तनम्

१८४३

# प्रास्ताविकं किंचित्।

विदितमेवेदं मोहमयीस्थविश्वविद्यालयच्छात्राणां यदागामिसंवत्सरद्वये परीक्षणीयत्वेन न्ययोजीशावास्योपनिषत् शाङ्करभाष्येण श्रीकूरनारायणकृतप्रकाशिकया च सह । तत्र शाङ्करभाष्यमानन्दज्ञानकृतव्याख्यासहितं बहुशो मुद्रितं तेन विद्यार्थिनां तल्लाभः सुकरः । श्रीकूरनारायणकृतप्रकाशिका तु द्वित्रपुस्तकेषु पुस्तकान्तरघटितत्वेन मुद्रिता । तेन मूल्यबाहुल्यात्तत्पुस्तकं दुर्लभमिव प्रतीयेत कैश्चित् । किं च यासौ द्वित्रपुस्तकेषु मुद्रिता प्रकाशिका सात्यन्ताशुद्धत्वेन पिपठिषूणामध्यापकानां च वैरस्यं जनयेत् । किं च विशेषतो दूयते चेतो निवेदयितुं यदुपलब्धप्रकाशिकापुस्तके सप्तदशे मन्त्रे पंक्त्यष्टकात्मको ग्रन्थलोपोऽपि । कथं विशेषज्ञोऽपीमं ग्रन्थलोपमपाकृत्य पाठयितुं प्रभवेदिति सुधियो विभावयन्तु । तदेतत्सर्वं ग्रन्थलोपादिकं पर्यालोच्य विद्यार्थिजनसौकर्याय प्रयतमानेनैतत्पुस्तकप्रकाशनाय प्रवृत्तेन पाठकोपाह्वरघुनाथात्मजश्रीकृष्णशर्मणा संसूचितोऽहं श्रीकूरनारायणकृतप्रकाशिकापुस्तकं संशोध्य महायासोपलब्धद्राविडलिपिपुस्तकानुसारं पूर्वोक्तं ग्रन्थमपूरयम् । एवं पूर्वं प्रकाशिकापुस्तकं संस्कृत्य यथार्थनाम्न्या बालबोधिन्या समयोजयम् । अत्र बालबोधिन्यां प्रकाशिकागृहीतानि मीमांसाधिकरणानि शास्त्रदीपिकाधिकरणमालानुरोधेन विवृतानि । तत्र तत्र जैमिनिसूत्राणि पूर्वमीमांसाप्रसिद्धान्यधिकरणनामानि च दर्शितानि । तथा व्याकरणयोगब्रह्मसूत्राणां स्थलानि यथायथं प्रदर्श्य तदर्थोल्लेखश्च कृतः । प्रकाशिकायां गृहीतान्यभेदभेदवाद्यादिमतानि सविस्तरं निरूपितानि । तथान्ते विशिष्टाद्वैतिमतं, अद्वैतिविशिष्टाद्वैतिमतविषयविभागश्च दर्शितः । तेन मन्ये पुस्तकमिदं विद्यार्थिनां विशेषत उपयोगाय भवेत् । प्रकाशिकापुस्तके पाठनिर्णये ग्रन्थलोपनिरासार्थे द्राविडलिपिपुस्तकोपलब्धौ च विशेषतः साहाय्यमासीत् बाके इत्युपाह्वानां महादेवशास्त्रिणां पुण्यस्थडेक्कनकालेजस्थाध्यापकपदं भूषयतां विदुषामतस्तदनुग्रहभरं सप्रमोदं वहामि । तदेतत्पुस्तकमुपयुज्य विद्यार्थिनः कृतकार्या भवेयुर्विद्वांसश्च विमर्शशालिनो विमत्सराः कृपयोपलभ्यमानं मानुषशेमुषीसुलभं शास्त्राव्युत्पत्तिजन्यं वा प्रमादं दर्शयेयुस्तेन कृतकृत्यतामानयेयमात्मानमिति मन्यमानः—

आषाढशुक्लैकादशी
१८४३
पुण्यपत्तने.

विद्वद्वशंवदः पाठकोपाह्वत्र्यम्बकतनूजनुः
श्रीधरशर्मा ।

# रामानुजमतम् ( विशिष्टाद्वैतमतम् )

विशिष्टाद्वैतशब्दार्थः–चिदचिद्विशिष्टस्य परमात्मनोद्वैतमथवा सूक्ष्मशरीरविशिष्टस्य कारणरूपस्य परमात्मनस्तथा स्थूलशरीरविशिष्टस्य कार्यरूपस्य परमात्मनश्चेत्युभयोरद्वैतम् । पदार्थास्त्रिविधा अचिच्चिदीश्वरभेदेन । तत्र प्रकृतिकालशुद्धसत्त्वभेदेनाचित्पदार्थस्त्रिविधः । तत्रापि प्रकृतिस्त्रिधा सूक्ष्मसूक्ष्मतरसूक्ष्मतमेतिभेदेन । सा च क्रमेणाव्यक्ताक्षरतम इति संज्ञिका । ईश्वरः परमात्मा स एव ब्रह्मेत्यभिधीयते । चिदचित् ( जीवजड ) पदार्थात्मकमीश्वरस्य शरीरं तच्छरीरमपि स्थूलसूक्ष्मभेदेन द्विविधं सूक्ष्मशरीरयुतः परमात्मा स्थूलस्य जगत उपादानकारणम् । परमात्मन्यप्राकृताः शब्दस्पर्शरूपरसगन्धाः शक्तिज्ञानानन्दादयश्च गुणाः सन्ति । स च सर्वाश्रयो व्यापकश्च तज्ज्ञानं शरीरमपि व्यापकम् । स च पंचविधः परव्यूहविभवान्तर्याम्यर्चावतारभेदेन । स एव सूक्ष्माचिदचित्पदार्थयुक्तो जगत उपादानं विशेषसंकल्पयुक्तश्च निमित्तकारणं भवति । तथा कालाद्यन्तर्यामितया सहकारिकारणं च भवति । अयं परमात्मा सर्वेषां चेतनाचेतनवस्तूनां प्रेरकः कर्मानुकूलफलप्रदोप्युदासीनः सर्वजीवानां जडानां च नियन्ता कल्याणगुणपूर्णो हेयगुणप्रत्यनीकः सर्वान्तर्याम्यचिन्त्यशक्तिबलैश्वर्यवीर्यतेजःसंपन्नो भक्तिलभ्यश्चास्ति । जीवजडौ परमात्मनः शरीरभूतौ । एतद्विशिष्टपरमात्मातिरिक्तं जगति किंचिन्नास्ति । यद्यपि जीवजडौ विशिष्टपरमात्मनोनतिरिक्तौ तथापि केवलपरमात्मनस्तौ भिन्नौ नित्यौ च । चित्पर्यायो जीवः स चाणुर्न तु व्यापकः । स च चेतन ईश्वराधीनकर्तृत्वगुणः स्वप्रकाशः सुखी नित्यः प्रतिशरीरं भिन्नश्च । स च बद्धमुक्तनित्यभेदेन त्रिविधः । ब्रह्मादिकीटान्ताः सर्वे संसारिजीवा बद्धाः । विमुक्तसंसाराः प्राकृतसूक्ष्मशरीररहिता वैकुण्ठे भगवत्संनिधिनिवासिन आविर्भूताष्टगुणा ये ते मुक्तजीवाः । मूलत एव संसारसंबन्धरहिताः परमात्मेच्छानुवर्तिनोसंकुचितज्ञाना येनन्तगरुडादयस्ते सर्वे नित्यजीवाः । जीवात्मानोनन्ताः । जगत्प्रवाहश्चानादिः । नित्यजीवाः स्वेच्छया लीलाविभूतिष्ववतारं धारयन्ति । एतेषु नित्यजीवेषु यथाधिकारं तारतम्यं वर्तते । मुक्तजीवेषु तारतम्यं नास्ति । तेषां न कोप्यधिकारो नवा तेषामवतारधारणम् । मुक्तौ जीवैः परमात्मसादृश्यं लभ्यते न त्वैक्यम् । जीवो ज्ञातृस्वरूप आनन्दस्वरूपश्च तथा कर्ता भोक्ता । तस्य शरीरं प्रकृतिजन्यं पाञ्चभौतिकं स च स्वयं परमात्मनः शरीरभूतः ॥ जीवात्मा लिङ्गदेहोपाधिना संसरति । सच लिङ्गदेहः प्राकृतोनादिश्च । उपाधिभूतलिङ्गदेहत्यागेन जीवेन मोक्षो लभ्यते । मोक्षावस्थायामपि जीवस्य ज्ञातृत्वं न हीयते । मोक्षार्थं जीवस्य ब्रह्मविचारो विधीयते । तत्र पूर्ववृत्तं कर्म ब्रह्मज्ञानेङ्गभूतम् । न साधनचतुष्टयसंपत्त्यानन्तर्यं तत्रापेक्ष्यते । यत्रेश्वरनित्यजीवमुक्तजीवाश्च विविधभोगानुपभुञ्जते । यत्र च कर्मरूपाविद्या न संभवत्यसौ देशः शुद्धसत्त्वमित्यभिधीयते । एतत्सत्त्वं प्राकृतसत्त्वगुणतो विलक्षणम् । ज्ञानं स्वप्रकाशं चेतनं व्यापकं बुद्ध्यपरपर्यायं चास्ति । जीवेश्वरौ तदाधारभूतौ तयोर्धर्मो ज्ञानं तच्च स्वतः प्रमाणं बद्धदशायां तत्कर्माच्छन्नं संकुचितं भवति मोक्षे तु तद्विकसितं भवति । प्रकृतिपदार्थो जडो नित्यश्च । तया परमात्मस्वरूपमाच्छादितं भवतीति कर्मवश्या

बद्धजीवा मन्यन्ते । इयं प्रकृतिः सत्त्वरजस्तम इति गुणत्रयात्मिका चतुर्विंशतितत्त्वात्मिका च । तानि तत्त्वानि प्रकृतिर्महत्तत्त्वमहंकारो मनः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च तन्मात्राणि पञ्च महाभूतानि चेति । एतेषु प्रथमतत्त्वं प्रकृत्याख्यं सर्वेषां जडानां मूलकारणम् । एतदतिसूक्ष्मं सृष्ट्यादौ परमात्मन इच्छया प्रकृतौ परिणम्यमानायां यथा यथा सूक्ष्मता हीयते तथा तथावस्थान्तरं भवति । तत्र प्रथमावस्था तम इत्यभिधीयते । द्वितीयावस्थाक्षरं, तृतीयावस्थाव्यक्तं च । इदं तृतीयमव्यक्तं नाम कार्योन्मुख्यव्यक्तावस्था, अव्यक्तानन्तरं जायमानाः सर्वे परिणामा व्यक्ताः । तत्र प्रथमपरिणामो महत्तत्त्वम् । अत्र गुणत्रयसाम्यं नास्ति । त्रिष्वन्यतमो गुणः प्रबलो भवति । महत्तत्वं ब्रह्मणः शरीरम् । अस्माज्जायतेन्तःकरणवृत्तिर्बुद्धिनाम्नी निश्चयाख्या । महत्तत्वात्सत्त्वगुणप्राबल्येन जायमानः सात्त्विकोहंकारो वैकारिक इति कथ्यते । अस्मात्सात्त्विकाहंकारात्पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चोत्पद्यते । एतदेव मनः स्मृत्यादीनां साधनं सर्वेन्द्रियाणां प्रेरकं संसारबन्धकारणीभूतं च । अचिद्वस्तूनां यथा महत्तत्त्वादिरूपेण परिणामा भवन्त्येवं जीवात्मनो ज्ञानधर्मसंकोचविकासादयोवस्था भवन्ति । तथात्मनोपि सृष्ट्यादिसंकल्पादयोवस्था भवन्ति । जडव्यापाराः सदा परबुद्ध्यवलम्बनेन संभवन्ति । परमात्मनः सर्वे व्यापाराः स्वबुद्ध्यवलम्बनेन संभवन्ति । जीवस्य तु केचिदेव व्यवहारा ईश्वरबुद्ध्यवलम्बनेन केचित्स्वस्य परमेश्वरस्य चेत्युभयोर्बुद्धिमवलम्ब्य प्रवर्तन्ते । केवलमेव स्वबुद्धिमवलम्ब्य जीवेन व्यवहारः कर्तुं न शक्यते । जडपदार्थाः सदान्यस्य शरीरं भवन्ति । आत्मत्वं तु तेषां नास्ति । तथेश्वरः सदात्मैव शरीरत्वं तस्य नास्ति । जीवस्तु स्थूलदेहस्यात्मा । ईश्वरस्य शरीरमित्युभयं भवति । अन्तर्नियामकत्वं चात्मशब्दप्रवृत्तिनिमित्तं तेन जीवः परमात्मेति द्वयमप्यात्मशब्देन व्यवह्रियते । अन्तर्यामित्वस्य पराकाष्ठा परमात्मेति । ज्ञानं द्विविधं स्वरूपभूतं धर्मभूतं च । तत्र स्वरूपभूतज्ञानं जीवाभिन्नं धर्मभूतज्ञानं तु ततः पृथक् । एवं च स्वरूपभूतज्ञानदृष्ट्या ज्ञानस्वरूपो जीवः । स एवाहमिति प्रतीत्या भासमानत्वाज्ज्ञेयोपि । तथा तादृशज्ञानवत्त्वात् स एव ज्ञातृस्वरूपोपि । पञ्चीकृतपञ्चमहाभूतानि महत्तत्त्वमहंकारश्चेति सप्त तत्त्वानि प्रकृतिश्चेत्यष्टभ्यः शरीरोत्पत्तिः । ततस्तच्छरीरं पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्च भूषयति । भक्तिः प्रपत्तिश्चेति मोक्षसाधने । भक्तिर्भजनम् । अनन्यभावेन परमेश्वरः शरणीकरणीय इति प्रपत्तिः । साधनक्रमश्चेत्थम्–कर्मज्ञानयोगौ भक्तिकारणम् । साधनभक्तिः प्रपत्त्यङ्गम् । सा च प्रपत्तिर्यत्र देहे तद्देहपात एव मोक्षः । अत्र मते प्रत्यक्षमनुमानमागमश्चेति प्रमाणत्रयम् । अन्यप्रमाणानामत्रैवान्तर्भावः । अत्र मते सत्ख्यातिः । जीवन्मुक्तिर्नास्ति । अत्र मतेद्वैतवाद्यादृतो विवर्तवादः खण्ड्यते परिणामवादश्च स्वीक्रियते । तत्तात्पर्यमित्थम्–जगति विद्यमानानि सर्ववस्तूनि सत्यानि तानि मूलप्रकृतिपरिणामभूतानि च । श्रुतिगतानि ' असत्यं ' ' नास्ति ' इति पदानि न मिथ्यार्थबोधकानि किन्तु विनाशित्वबोधकानि । परिणामिपदार्थस्वरूपं तत्तदवस्थासु भिद्यतेतस्ते पदार्था असत्या विनाशिन इत्युच्यन्ते नतु मिथ्याभूतत्वं तेषामिति मन्तव्यम् । एवं च जगत्सत्यमिति राद्धान्तः ।

---

ॐ

रामानुजमतानुयायिनारायणकृतप्रकाशिकासमेता ।

# ईशावास्योपनिषत् ।

---

**ॐ ईशा वास्यमिदꣳ सर्वं यत्किंच जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ १ ॥**

अथ वाजसनेयिनां संहितान्तिमाध्यायो व्याख्यायते—सर्वेशानः सर्वभूतान्तरात्मा दोषानर्हः सर्वविद्यैकवेद्यः । कर्माराध्यः साध्यभक्त्येकलभ्यः श्रीमान्व्यक्तो वाजिनां संहितान्ते ॥ रजस्तमःप्रचुरकरणकलेवरसृष्टिविशिष्टत्वात्-ईश्वरोऽहमहं भोगी ( भ. गी. १६ । १४ ) इत्यादिभगवदुक्तप्रक्रियया स्वतन्त्रोऽहं देवतान्तरपरतन्त्रोऽहमिति च भ्राम्यतस्तत्त्वबुभुत्सयोपसन्नस्य शिष्यस्य स्वतन्त्रतात्मभ्रमादिनिवृत्त्यर्थं चिदचिदात्मकस्य प्रपञ्चस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वमुपादिशति—ईशा वास्यमिति ।

---

**नत्वा श्रीशंकरं साम्बं बालव्युत्पत्तिसिद्धये ।**
**व्याख्यायते मया व्याख्या नारायणप्रकाशिका ॥ १ ॥**

ॐ भूधरभूजानिर्विजयतेतमाम् । आशीर्नमस्क्रियावस्तुनिर्देशात्मकं त्रिविधं मंगलं तन्मध्येऽत्र वस्तुनिर्देशात्मकं मंगलमाचरिष्यन् चिकीर्षितमर्थं प्रतिजानाति-**अथेति । वाजसनेयिनां संहितेति** । वाजसनेयिनां पञ्चदशशाखाः काण्वमाध्यन्दिन्यादयः । तत्र प्रथमत्यागे मानाभावात्प्रथमा या काण्वशाखा तद्गतोपनिषद एवेदं व्याख्यानं प्रकाशिकाभिधम् । उपान्त्याध्यायपर्यंतं कर्मकाण्डमभिधायान्तिमेनाध्यायेन ज्ञानकाण्डं प्रतिपाद्यते । **सर्वेशान इति** । दोषानर्हः । कल्याणगुणगणविशिष्टत्वाद् दोषा भगवति न सन्तीति भावः । साध्यभक्त्येकलभ्यः-केवलया साध्यभक्त्या प्राप्यमाणः । साध्यभक्तियुक्ताः श्रीपरांकुशादयः इत्युक्तं यतीन्द्रमतदीपिकायाम् । **रजस्तम इत्यादि** । रजस्तमःप्रचुरा रजस्तमोगुणबहुला या करणानामिन्द्रियाणां कलेवराणां देहानां च सृष्टिस्तद्युक्तत्वात् । भगवदुक्तप्रक्रियया-ईश्वरोऽहमित्यादिवाक्योक्तपद्धत्या । भ्राम्यतः-अहं स्वतन्त्रो न भगवत्परतन्त्रः । अथवा भगवदितरदेवता ब्रह्मशिवादयस्तत्परतन्त्र इति च भ्रमनशरूपम् । तत्त्वबुभुत्सया-परमरहस्यजिज्ञासया । उपसन्नस्य-शरणं प्राप्तस्य । स्वतन्त्रात्मभ्रमादिनिवृत्त्यर्थं-आत्मपदेनेह जीवो गृह्यते । जीवः स्वतन्त्रो न भगवत्परतन्त्र इति व्यामोहनिरासार्थम् । चिदचिदात्मकस्य-चित्पदेन जीवस्य अचित्पदेन जडस्य च ग्रहणम् । **परमपुरुषायत्तेति** ।

इदं ब्रह्मादिस्तम्बपर्यन्तं सर्वमीश्वरव्यतिरिक्तं भोक्तृभोग्यरूपम् । ईशा सर्वनियन्त्रा पुरुषेणेति यावत् । 'योऽसावसौ पुरुषः' [ बृ० ५।१५।१ ] इत्यनुवदिष्यमाणत्वात् । स हि सर्वस्येष्टे । तथा च श्रुत्यन्तरम्—'पतिं विश्वस्यात्मेश्वरम्' [ म० ना० ११ । ३ ] इति । तेन वास्यं वसनीयं व्याप्यमिति भावः । यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । [ म० ना० ११ । ६ ] इति श्रुतेः । यद्वा सर्वाधारे स्वस्मिन्नेव सर्वं वास्यं प्रतिष्ठापनीयम् । स्मर्यते हि- सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ इति । जगत्यां मह्याम् । इदं लोकान्तरोपलक्षणम् । जगदन्यथात्वं गच्छत् । तत्राचिदंशस्य भोग्यत्वाय स्वरूपविकाररूपमन्यथात्वम् । चिदंशस्य तु भोक्तृत्वाय ज्ञानसंकोचविकासादिस्वभावविकारेणान्यथात्वमिति भेदोऽनुसंधेयः । ईशेनावास्यं किंचिदपि नास्तीति द्रढयितुं यत्किंचेति जगद्विशेष्यते । जगत्यादिषु लोकेषु यत्किंचिद्भोक्तृभोग्यरूपं जगदस्ति तदिदं सर्वमीशा वासुदेवेन वास्यं धार्यं चेति वाक्यार्थः । इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं

---

चिदचितां जीवजडानां जन्मादिद्वारा स्वरूपप्राप्तिः । रक्षणं गमनादिप्रवृत्तयश्च भगवदधीना इत्यर्थः । **ब्रह्मादीति** । स्तम्बस्तृणविशेषः । ब्रह्माणमारभ्य तृणपर्यन्तम् । **ईश्वरव्यतिरिक्तमिति** । ईश्वरस्तु स्वतन्त्रः । भोक्ता—जीवः । भोग्यं जडजातम् । **अनुवदिष्यमाणत्वादिति** । ब्राह्मणं हि शतपथाख्यं वाजसनेयिसंहिताव्याख्या रूपं तत्र बृहदारण्यकमीशावास्योपनिषद्व्याख्यानरूपं तत्र गृहीतेनार्थेन संहितान्तर्गतार्थो यथा संगतो भवेत्तथा व्याख्येयं व्याख्याता । मया च तथानुष्ठितमिति प्रकाशिकाकृदाशयः। अर्थान्तरमाह- **यद्वेति** । अस्मिन्पक्षे स्वस्मिन्नेवेत्यस्याध्याहारः कर्तव्यः । तत्र प्रमाणमाह-**स्मर्यत इत्यादिना** । **लोकान्तरोपलक्षणमिति** । जगतीपदेन भुवरादिलोका ग्राह्या एवं च भूरादिसर्वलोकस्थमित्यर्थः । **अन्यथात्वमिति** । जगदिति यङ्लुङन्तसाधितपदप्रयोगः । तेन 'नित्यं कौटिल्ये गतौ' ( पा. सू. ३।१।२३ ) इति पाणिन्यनुशासनात् अन्यथात्वं कुटिलत्वं गच्छदित्यर्थः । **तत्राचिदंशस्येति** । अयं भावः । चिदचिद्विशिष्ट ईश्वर एव सर्वमिति विशिष्टाद्वैतमतम् । तत्राचिदंशो भोग्यस्वरूपः । चिदंशस्तु जीवो भोक्तृस्वरूपः । अचिदंशे जडे स्वरूपविकाररूपमन्यथात्वम् । चिदंशे जीवे तु ज्ञानसंकोचविकासादिनान्यथात्वम् । तच्च यथा देवादिजीवेषु बहुज्ञत्वाज्ज्ञानविकासः । मनुष्यादिजीवेष्वल्पज्ञत्वाज्ज्ञान-

क्षेत्रज्ञ एव च ॥ [ म. भा. अ. वि. स. फ. १६ ] इत्याद्युपबृंहणानि बोध्यानि 'पृथगात्मानं प्रेरितारं च मत्वा [ श्वे० १ । ६ ] । ज्ञाज्ञौ द्वावजावीशानीशौ [ श्वे० १ । ९ ] । ' नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् [ श्वे० ६ । १३ ] इत्यादिषु श्रुतिषु प्रसिद्धो जीवेश्वरयोरीशेशितव्यादिलक्षणोऽत्यन्तभेदोऽप्यत्र सिद्धः । ननु रूढिर्योगमपहरतीति न्यायादीशोऽत्र रुद्रः स्यात् । मैवम् । ' एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि न यमो नाग्निर्न सोमो न सूर्यः स एकाकी नर एव [ म. ना. १ ] । इत्यादिषु श्रुतिषु भगवत्कार्यत्वेन कर्मवश्यत्वेन च संप्रतिपन्ने रुद्रे सर्वव्यापित्वसर्वाधारत्वादेरन्वयासंभवेन विरुद्धार्थविषयतयैव रूढेर्भग्नत्वात् । एवं च जगत्कारणवादिवाक्यावगताकाशप्राणादिशब्दन्यायेनाजः सर्वेश्वरः सिद्ध इत्यनवच्छिन्नैश्वर्यतया प्रसिद्धेः सर्वेश्वरे यौगिक एवायमीशशब्दः प्रत्येतव्य इति सिद्धम् । एवं मुमुक्षोरीश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषितां वृत्तिमुपदिशति—तेन त्यक्तेन भुञ्जीथाः । तेन जगता भोग्यताभ्रमविषयेणेति भावः । त्यक्तेनाल्पत्वास्थिरत्वदुःखमूलत्वदुःखमिश्रत्वदुःखोदर्कत्वदेहाभिमानमूलत्वास्वाभाविकब्रह्मानन्दानुभवविरुद्धत्वरूपा ये विषयदोषाः सप्त तान्निरूपणपूर्वकं परित्यक्ते-

---

संकोचः । **उपबृंहणानीति** । उपोद्बलकपुराणेतिहासवाक्यानि । इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्युक्तेः । उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थव्यक्तीकरणम् । इति रामानुजीयश्रीभाष्य उपबृंहणलक्षणमुक्तम् । **सिद्ध इति** । अभेदवादिमते जीवेश्वरयोरभेदस्तन्निरासार्थं जीवेश्वरयोरत्यन्तभेदः सिद्ध इत्याह । जीव ईशनीयत्वाद् भृत्यादिवत्परतन्त्रः । ईश्वरस्तु ईशत्वाद्राजवत्स्वतन्त्रः । तयोर्भेदाभावो न संभवतीत्यर्थः । ईशशब्दो रूढ्या रुद्रवाचकोऽस्ति । ईष्ट इति व्युत्पत्त्या भगवद्रूपोऽस्ति । ततश्च रूढेर्योगाद्बलीयस्त्वेन कथमीशपदेन भगवतो विष्णोर्ग्रहणमिति शंकते— **नन्विति** । अपहरति बाधते । **रूढेर्भग्नत्वादिति** । ' एको ह वै ' इति श्रुत्या रुद्रो भगवन्निर्मितः स्वकृतकर्मवश्यश्चेति बोध्यते । ततः कर्मतन्त्रे तस्मिन्सर्वव्यापित्वं सरसतया न घटते कर्मणस्तत्पूर्वभावित्वादेवं च रूढ्येशपदेन रुद्रग्रहणे सर्वव्यापित्वाद्यभाववति तस्मिन् सर्वव्यापित्वादिकमनेन मन्त्रेणोक्तं स्यात्तथा च मन्त्रस्य विरुद्धार्थप्रतिपादकत्वं प्रसज्ज्येत । अतो रूढिं भङ्क्त्वा यौगिकार्थेन भगवद्रूप एवार्थो ग्राह्यः । तथा च न विरुद्धार्थतेत्यर्थः । **जगत्कारणवादीत्यादि** । ब्रह्ममीमांसायां जगतः कारणं समन्वयाद् ब्रह्मैव नान्यदिति-तत्तु

नोपलक्षितः सन्भुञ्जीथाः । भगवदुपासोपयुक्तदेहस्य धारणमात्रौपयिकमन्न-पानादिकं यागदानहोमार्चनाद्युपयोगिपरिजनपरिच्छदादिकं च वर्गं भुञ्जीथा इत्यर्थः । यद्वा दोषसप्तकनिरूपणात्त्यक्तेन भोग्याभासेनोपलक्षितः सन्भुञ्जीथाः । सर्वावासत्वेन प्रकरणप्राप्तं प्रकृतमुक्तदोषप्रतिभटं निरातिशय-भोग्यं वक्ष्यमाणोपायमुखेन भुञ्जीथा इति योज्यम् । तत्र 'भोक्ता भोग्यं प्रेरितारं च मत्वा' [ श्वे० १ । १२ ] 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभि-चाकशीति ॥ [ मुं० ३ । १ ] 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीत-शोकः' [ मुं० ३ । २ ] इत्यादिभिः प्रपञ्चितस्तत्त्वत्रयविवेकोऽप्यत्रेति भावः । अनीशया भोग्यभूतया मायया प्रकृत्येत्यर्थः । जुष्टं प्रीयमाणम् । स्वस्मादन्यमीशमस्येशस्य महिमानमिति महिमानं चेत्यर्थः । तदेतिप्रतिनि-र्देशोऽध्याहार्यः । यदान्यमीशमस्य महिमानं च पश्यति तदा वीतशोको भवतीत्यर्थः । मा गृधः कस्यस्विद्धनम् । कस्यचिद्धनं कस्यापि बन्धोरबन्धोर्वा

---

समन्वयात् ( ब्र. सू. १।१।४ ) इति सूत्रेण साधिते आकाशप्राणादिभ्यो जगदुत्पत्तिरिति प्रतिपादकेषु वाक्येषु आकाशादिपदेन ब्रह्मैव ग्राह्यं न तु भूताकाशादिकमिति आकाश-प्राणाद्यधिकरणैः ब्रह्ममीमांसाप्रथमाध्यायप्रथमपादस्थैः साध्यते । तथा चाकाशाधिकर-णविषयवाक्यम् । छान्दोग्ये–सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायान् । आकाशः परायणम् । इति । एवं चात्राकाशा-दिपदेन यथा ब्रह्मैव प्रतिपाद्यते तथात्रेशपदेन निरवधिकैश्वर्यसंपन्नः परमात्मा यौगिकार्थेन ग्राह्यः । न रुद्रादिः । अनवाच्छिन्नैश्वर्यतया अप्रतिबद्धविभूतित्वेन । **अल्पत्वास्थिरत्वेति ।** अल्पत्वादयो विषयदोषाः । दुःखोदर्कत्वं– दुःखसमाप्तिकत्वम् । एवं च विषया दुःखमूला दुःखमिश्रा दुःखावसानाश्चेति भावः । सर्वविषयत्यागस्य कर्तव्यत्वेपि देहधारणार्थमावश्यक-मन्नपानादिकं त्वंगीकर्तव्यं देहस्य भगवदुपासनायामुपयुक्तत्वात् । तथा यागाद्युपयोगिपदार्थ-जातं स्वीकर्तव्यं यागादीनां चित्तशुद्धिसाधनत्वात् । **दोषसप्तकनिरूपणादिति ।** अल्पत्वादयः पूर्वोक्ताः सप्तदोषाः । **प्रकृतमिति** ' ब्रह्मेत्यर्थः । प्रतिभटं–विरोधि । **वक्ष्यमाणोपायमुखेनेति** । कुर्वन्नेवेह कर्माणीति द्वितीयमन्त्राद्युक्तकर्मयोगरूपोपायद्वारे-त्यर्थः । **तत्त्वत्रयविवेक इति** । चिदचिदीश्वरेति तत्त्वत्रयम् । **तदेति प्रतिनिर्देश इति** । यत्तदोर्नित्यसंबंधाद्यदेत्यनुगुणं तदेति पदमध्याहार्यमित्यर्थः । **अर्थतृष्णामिति ।**

धनं मा गृधः माभिकाङ्क्षीः। गृधु अभिकाङ्क्षायामिति धातुः। आह च यमः किंकरं प्रति—परमसुहृदि बान्धवे कलत्रे सुतवनितापितृमातृभृत्यवर्गे। शठमतिरुपयाति योऽर्थतृष्णां पुरुषपशुर्नहि वासुदेवभक्तः। इति स्मृतेः। इदं च धनाशाप्रहाणं परमात्मव्यतिरिक्तकृत्स्नविषयवैराग्योपलक्षणम्। परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि। इति स्मृतेः॥ १॥

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ २॥**

एवं विरक्तस्य विदुषः फलसङ्गकर्तृत्वादिरहितो ब्रह्मविद्याङ्गभूतः कर्मयोगो यावज्जीवमनुष्ठेय इत्याह कुर्वन्निति। शतं समाः—शतं संवत्सरान्। कर्माणि नित्यनैमित्तिकानि। कुर्वन्नेवेह लोके जिजीविषेज्जीवितुमिच्छेत्। ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवितुमिच्छा भवतीति प्राप्तत्वात्। शतायुर्वै पुरुष इति श्रुतेर्यावज्जीवं नित्यनैमित्तिककर्माणि कुर्वीतेति विधिः संक्रामयितव्यः। यावज्ज्ञानयोगाधिकारं कर्मयोगः कर्तव्य इति भावः। न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्येवकाराभिप्रायः। त्वयि। ईश्वरपरतन्त्ररूपज्ञानतया तदाज्ञापरिपालनरूपकर्मानुष्ठानेऽधिकारपूर्तिमतीति भावः। एवमेवानुष्ठानमित्यर्थः। उक्तमर्थं व्यतिरेकेण दृढीकरोति-नान्यथेतोऽस्तीति। इतः कर्मानुष्ठानादन्यथा प्रकारान्तरं नास्तीत्यर्थः। नान्यः पन्थास्तत्तोषकारणमिति स्मृतेः। नन्वीश्वरवेदिनोऽपि कर्मानुष्ठानादवश्यंभावी बन्धः स्यादित्याशङ्क्याह—न कर्म लिप्यते नर इति। ब्रह्मविद्याविरुद्धेषु कर्मफलेषु न रमत इति नरः। प्रस्तुतब्रह्मविदि नरे विद्याङ्गतया क्रियमाणं कर्म न लिप्यते न स्वर्गादिहेतु भवति प्रत्युत शुद्ध-

---

परमसुहृद्बान्धवादीनां धने यो नरस्तृष्णां करोति स नरपशुरेव न भगवद्भक्त इति श्लोकतात्पर्यम्। **इदमित्यादि**। न केवलं धनविषयकतृष्णैव परित्याज्यापितु भगवदितरेषु सर्वेष्वपि वस्तुजातेषु तृष्णा न कर्तव्या। भगवद्विषये तु वैराग्यं न कर्तव्यमित्यर्थः॥ १॥

**नित्यनैमित्तिकानीति**। अकरणजनितप्रत्यवायपरिहारार्थं नित्यनैमित्तिकानि कर्तव्यानि। काम्यनिषिद्धानि च परिहरणीयानीत्यर्थः। **संक्रामयितव्य इति**। कुर्वन्नेवेह कर्माणीत्यादिश्रुतिरेवंरूपेण विपरिणमयितव्येत्यर्थः। **तत्तोषकारणमिति**। भगवत्संतोषकारणमित्यर्थः। नरशब्दस्य प्रकरणानुरोधेनार्थं दर्शयति—**न रमत इति**।

प्रत्यगात्मसाक्षात्कारमेवोत्पादयतीति भावः । यत्तु कुर्वन्नेवेह कर्माणीत्ययं विधिरविद्वद्विषय एव नतु ब्रह्मविद्विषयस्तस्य विधिनिषेधशास्त्रवश्यत्वाभावादिति व्याख्यानम् । तत्प्रकरणविरुद्धम् । ' विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ' [ ई० वा० । १ । १ ! इत्याद्युपरितनविध्यन्तरविरुद्धं चेति न वेदविदो बहु मन्वते ॥ २ ॥

**असुर्या नाम ते लोका अन्धेन तमसावृताः ।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥**

एवं मन्त्रद्वयेन तत्त्वत्रयं विद्याङ्गकर्मानुष्ठानं चोपदिष्टम् । इदानीं य आसुरप्रकृतयः शास्त्रविधिमुत्सृज्य यज्ञादि कर्म कुर्वन्ति निषिद्धकर्म चाचरन्ति ते आत्मघातिनो निरयपातिन इत्युपदिशत्याचार्यः– असुर्या इति । असुराणां स्वभूता असुर्या अतिदारुणा इत्यर्थः । नामेति प्रसिद्धौ । असुरस्व भावानुभाव्या निरयसंज्ञिता लोकाः सन्तीति शास्त्रप्रसिद्धमिति भावः । तान्विशिनष्टि–अन्धेन तमसावृता इति । अन्धेनातिगाढेन तमसान्धकारेणावृता व्याप्ताः । आलोकप्रसङ्गरहिता इति भावः । ये

---

रम्धातोरौणादिको डप्रत्ययः । शाङ्करभाष्योक्तमुपक्षिपति–**यत्त्विति** । तत्र हि एवमात्मविदः पुत्राद्येषणात्रयसंन्यासेनात्मनिष्ठतयात्मा रक्षितव्य इत्येष वेदार्थः । अथेतरस्यानात्मज्ञतयात्मग्रहणाशक्तस्येदमुपदिशति मन्त्रः कुर्वन्नेवेति । प्रथममन्त्रो ब्रह्मविद्विषयो द्वितीयस्त्वज्ञानिविषय इति शांकराभिप्रायः **विधिनिषेधशास्त्रवश्यत्वाभावादिति**। अहरहः संध्यामुपासीत, ब्राह्मणो न हन्तव्यः इति विधिनिषेधौ वेदरूपशास्त्रे उक्तौ । तदाज्ञावशंवदत्वं ब्रह्मविदोऽनुपपन्नं ' तस्य वेदा अवेदा भवन्ति ' इति बृहदारण्यकोक्तेः। शास्त्रलक्षणं च–प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन च । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते' इत्युक्तम् । **प्रकरणविरुद्धमिति** । ईशावास्येति संपूर्णोऽध्यायो मुख्यतो ज्ञानप्रतिपादकत्वाज्ज्ञानप्रकरणं न कर्मप्रकरणमिति प्रकाशिकाकृदाशयः । **विद्यां चेति**। अस्यापि मन्त्रस्य व्याख्यायाः प्रकाशिकायाः शांकरभाष्ये भिन्नोऽर्थः । **वेदविद इति** । वेदार्थतत्वज्ञा रामानुजाचार्यादय इत्यर्थः ॥ २ ॥

**उपदिष्टमिति** । ईशावास्येत्यादिना प्रथममंत्रेण चिदचिदीश्वरेति तत्वत्रयमुक्तं द्वितीयेन कुर्वन्नितिमन्त्रेण विद्याङ्गभूतं निष्कामकर्मानुष्ठानमुपादिष्टम् । शास्त्रविधिमिति च शास्त्रोक्तां यज्ञाद्यनुष्ठानोक्तामितिकर्तव्यतां त्यक्त्वा यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोतीति भगवदुक्तेस्तस्य सिध्द्यभावः । निषिद्धकर्म–सुरापानब्राह्मणहननादि-

केचन देवा मनुष्या ब्राम्हणक्षत्रियादयो वात्महनः । ‘ असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत् ’। [ तै० २।६।१। ] इत्याम्नाता ब्रह्मज्ञानविहीनाः काम्यनिषिद्धकर्मादिनिष्ठा इत्यर्थः । जना जनिमन्तः संसरन्त इत्यर्थः । ते प्रेत्य देहादुत्क्रम्य तानभितो गच्छन्ति । तान्पृथिव्यन्तरिक्षस्वर्गरौरवादिसंज्ञितान्निरयान्निरन्तरं गच्छन्तीति भावः ॥३॥

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥४॥**

एवं विद्यायां शीघ्रं प्रतिपत्तिसिद्ध्यर्थमविदुषामनर्थ उक्तः । अथ सर्वावासत्वेन प्रस्तुतस्येश्वरस्यानन्तविचित्रशक्तियोगं व्यञ्जयन्नुपदिशति- अनेजन्न कम्पमानम् । एजृ कम्पने । एकं प्रधानतमम् । प्रधानं शास्त्रविदुषामिति रुद्रस्मृतेः । स्वाधिकसमानाद्वितीयरहितमिति वा । ‘ न तत्समश्चाभ्यधिकश्च दृश्यते ’ [ श्वे० ६ । ८ । ] इतिश्रुतेः । परमसाम्यमापन्ना अपि मुक्ता ईशाधीना एवेति भावः । मनसो जवीयः-वेगवत्तो मनसो जवीयो वेगवत्तरम् । निष्कम्पं वेगवत्तरं चेति विरोधः प्रतीयते । परिहारस्तु विभुत्वाद्वस्तुतो नैजति तत एव मनसो गोचरदेशे वर्तत इति मनसो जवीय इत्युपचर्यत इति । किंच देवा ब्रम्हरुद्रादयः पूर्वमर्षत् । प्रागेव

---

रुपम् । निरयः-नरकः । **असुरस्वभावानुभाव्या इति** । पूर्वोक्तासुरस्वभावैः पुरुषैरुपभोग्या इत्यर्थः । **आलोकप्रसंगरहिता इति** । आलोको ज्ञानं प्रकाशश्च तत्प्राप्तिरहिताः । **असन्नेवेति** । ब्रह्म असद्रूपमेवास्तीति यो वेद सोसत्स्वरूपो भवतीति श्रुत्यर्थः । **काम्यानिषिद्धकर्मादिनिष्ठा इति** । काम्यं-इष्टापूर्तादि । निषिद्धं ब्राह्मणहननादि । आदिपदेन शास्त्रोक्तसंध्यावन्दनादिकाले जलताडनादिरूपः स्वेच्छाचारो ग्राह्यः ॥ ३ ॥

**प्रस्तुतस्येति** । ईशावास्येत्यादिना प्रथममन्त्रेण भगवान् सर्वावास इत्युक्तम् । **अनन्तविचित्रेति** । अनेजन्मनसो जवीय इति कथिताः परस्परविरुद्धशक्तयः । व्यञ्जयन्-स्पष्टयन् । **स्वाधिकसमानाद्वितीयरहितमिति** । स्वस्मादधिकः स्वेन समानश्च यो द्वितीयस्तद्रहितम् । न कोऽपि भगवत्तुल्यस्तदधिको वेत्यर्थः । **परमसाम्येति** । निरञ्जनः परमं साम्यमुपैतीति श्रुतेः । परमसाम्यमेव भवति न त्वभेद इति विशिष्टाद्वैतिमतम् । भेदे सत्यन्याधीनत्वं समञ्जसम् । **प्रतीयत इति** । एवं विरोधाभास इत्यर्थः । विरोधपरिहारस्तु ब्रह्मणो व्यापकत्वेन मनःप्राप्तेः प्रागेव तत्तत्स्थले सत्त्वान्मनसोपि वेगवत्तरत्वम् । **गोचरदेश इति** । गाव इन्द्रियाणि चरन्ति यस्मिन्निति विग्रहः । मनसो गोचरदेशे

सर्वान्देवान्प्राप्नुवन्नित्यर्थः । एतत्प्रस्तुतं सर्वावासं ब्रह्म नाप्नुवन्नेतावन्तं कालं न लेभिर इति भावः । पूर्वमेव प्राप्तं न प्राप्नुवन्निति च विरोधः । विभुतया प्राप्तमपि कर्मसंकुचितज्ञानाः क्षेत्रज्ञा आचार्योपदेशमन्तरेण स्वबुद्ध्या नाप्नुवन्तीति परिहारः । तथोक्तं छान्दोग्ये ' तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः [ छा० ८ । ३ । २ ] इति । ' अपि तद्धावतोऽन्यानत्येति यः पृथिव्यां तिष्ठन् ' [ बृ० ३ । ७ । ३ ] ' य आत्मनि तिष्ठन् ' । ' यः सर्वभूतेषु तिष्ठन् ' इत्यादिश्रुतेः । सर्वत्र तिष्ठदेव तद्ब्रह्म धावतोऽन्यान्देवादीनत्येति । तिष्ठतः पुरुषस्य धावदतिक्रमणं न घटत इति विरोधः । जविनो यावद्यावद्धावन्ति तावतस्तावतः परस्तादपि वर्तत इति तात्पर्यादविरोधः । तस्मिन्नपो मातरिश्वा दधाति । तस्मिन्सर्वावासेऽवस्थितो मातरिश्वा वायुः । अप इत्युपलक्षणं पयोधरग्रहनक्षत्रतारकादिकं बिभर्तीत्यर्थः । सर्वाधारभूतेन सर्वेश्वरेण विधृतो वायुस्तत्सत्तयैव बिभर्तीत्यभिप्रायः । ' एष सेतुर्विधरण एषां लोकानामसंभेदाय [ बृ० ४ । ४ । २२ ] । द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ इत्यादिषु प्रसिद्धमेतत् ॥ ४ ॥

---

–मानसप्रत्यक्षज्ञायमाने देशे । **कर्मसंकुचितज्ञाना इति** । विरुद्धेन कर्मणा संकुचितं ज्ञानं येषाम् । **तद्यथापीति** । यथा हिरण्यनिधिं हिरण्यमेव पुनर्ग्रहणाय निधातृभिर्निधीयते इति निधिस्तं हिरण्यनिधिं निहितं भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञा निधिशास्त्रैर्निधिक्षेत्रमजानन्तस्ते निधेरुपर्युपरि संचरन्तोपि निधिं न विन्देयुः शक्यवेदनमपि । एवमेवेमाः सर्वा इमाः प्रजाः सुषुप्तिकाले यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकमहरहर्गच्छन्त्योपि न लभन्ते । यतोऽनृतेन हृताः । **धावदतिक्रमणमिति** । धावन्तं पुरुषमतिक्रम्य गमनम् । **मातरिश्वेति** । मातरि आकाशे श्वयति वर्द्धत इति विग्रहः । **सेतुरिति** । ' षिञ् बन्धने ' इत्यस्य रूपम् । विधरणः–धारकः । असंभेदाय–भेदाभावाय । सेतोरभावे जलानि यथा दूरदेशं गच्छन्ति कुल्याद्वारेण सस्योपकाराय न भवन्ति तथा भगवद्रूपसेतोरभावे भूरादयो लोका विनश्येयुर्न परस्परोपकाराय भवेयुरिति भावः । **विधृतानीति** । एतस्याक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत इति श्रुतेः ॥ ४ ॥

तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

एवमुपदिष्टविचित्रशक्तित्वमादरेण मुखान्तरेण पुनरनुशास्ति—तदेजतीति । भूयोभूयः प्रवचनं श्रवणं च कर्तव्यमिति पुनरनुशासनाभिप्रायः । तथा च श्रूयते—येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् [ मुं० १।२ । १३ ] इति । तत्त्वतः । अज्ञानसंशयविपर्ययनिरासो यथा भवति तथा प्रोवाच प्रकर्षेण ब्रूयात्पुनः पुनरुपदिशेदित्यर्थः । तदेजति तत्सर्वव्याप्तं ब्रह्मैजति कम्पत इव जवीय इवेति यावत् । तदु तदेव नैजति वस्तुतो न कम्पते । तद्दूरे च तदेवान्तिके च वर्तते । आसुरदैवप्रकृतिकपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः । तथाह भगवाञ्शौनकः—पराङ्मुखा ये गोविन्दे विषयासक्तचेतसः ॥ तेषां तत्परमं ब्रह्म दूराद् दूरतरे स्थितम् । तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः ॥ विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके ॥ इति । अपरमप्येकं वैचित्र्यमित्याह तत्सर्वव्याप्तं परं ब्रह्मास्य सर्वस्य प्रमाणावगतस्य वस्तुनोऽप्यन्तर्भवति तदेव पुनस्तदानीमेव सर्वस्य बहिरपि भवतीत्यर्थः । तदितरेषां गृहान्तर्वर्तिनां तदानीं बहिष्ठत्वं न संभवति बहिर्वसतां च नान्तर्वर्तित्वमिति ब्रम्हणि वैचित्र्यमिति भावः । यद्यप्यणुषु नान्तर्वर्तिता संभवति तथाप्यप्रतिघातादविभक्तदेशतया वर्तित्वमात्रेणान्तर्वर्तित्वोक्तिः । एवं बहिर्व्याप्तिरप्य-

---

**अज्ञानसंशये**ति । स्थाणुर्वा पुरुषो वेत्युभयकोटिकं ज्ञानं संशयः । विपर्ययः–शुक्तिरजतवन्मिथ्याज्ञानम् । **पुनःपुनरुपादिशेदिति** । श्रुतिः श्रोतृहितैषिणीति न्यायाच्छ्रुतेरालस्यदोषाभावाच्च । **कम्पत इवेति** । इवेत्यनेन वस्तुतः कम्पनं निषिध्यते । **आसुरदैवेत्यादि** । यद्यपि विभुत्वात्सर्वसमीप एव ब्रह्म तथापि आसुरप्रकृतीनां पुरुषाणां तद्दूरस्थमिव भासते । दैवप्रकृतीनां तु समीपस्थमिव भासते । अतो दूरसमीपवर्तित्वेन कथनम् । शास्त्रोक्तविधित्यागपूर्वकं निषिद्धसेवित्वमासुरप्रकृतित्वमिति प्रागेवोक्तम् । तद्विरुद्धत्वं दैवप्रकृतिकत्वं शौनकवाक्ये प्रथमश्लोकपूर्वार्द्धे आसुरप्रकृतीनां लक्षणम् । द्वितीये श्लोके दैवप्रकृतीनां लक्षणम् । विशिष्टाद्वैतिमते नैयायिकादृताः प्रायः पदार्था अङ्गीक्रियन्ते । नैयायिकमते च परमाणवो नित्यास्तद्भेदो न संभवति ततश्च नित्यपरमाणोरन्तर्गतत्वं ब्रह्मणः कथमिति शंकते–**यद्यपीति** । यद्यपि परमाणूनां भेदाभावात्तन्मध्यगमनेनान्तर्वर्तित्वं ब्रह्मणो न संभवति घटाकाश इव तथापि परमाणुभेदमकृत्वा ब्रह्म पर·

विभुद्रव्यापेक्षयैव । न तु विभुद्रव्यापेक्षयापीति द्रष्टव्यम् । तदिदं वैचित्र्यं–तैत्तिरीयेऽप्युक्तम्–अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति ॥५॥

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥**

एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् । अथ सर्वं जगद्ब्रह्मात्मकमित्यनुसंदधानस्यैहिकं प्रयोजनमाह— यस्त्विति । यः परमात्मज्ञानाधिकृतः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तान्यात्मन्येव परमात्मन्येवानुस्यूतानि पश्यति ध्यायतीत्यर्थः । पृथिव्यादिध्रियमाणमपि तन्मुखेन परमात्मन्येव स्थितमित्येवकाराभिप्रायः । तुशब्देनास्याधिकारिणो माहात्म्यविशेषो द्योत्यते । किंच सर्वभूतेषु चात्मानं परमात्मानं यः पश्यतीति । इदं व्याप्तिमात्रपरम् । परमपुरुषस्यानन्याधारत्वादिति भावः । यच्छब्दस्य स इति प्रतिनिर्देशोध्याहार्यः । स उक्तविधज्ञानी । ततस्तेषु सप्तम्यर्थे तसिः । ब्रह्मात्मकतया दृष्टेषु सर्वेषु भूतेष्वित्यर्थः । न विजुगुप्सते कुतश्चिदपि न बीभत्सते । स्वात्मविभूतिन्यायेन क्वचिदपि निन्दां न करोतीति भावः ॥ ६ ॥

---

माणुसमानप्रदेशे तिष्ठति । अत उभयोः परमाणुब्रह्मणोः समानदेशवर्तित्वाद्ब्रह्मणः परमाण्वन्तर्गतत्वम् । **अविभुद्रव्यापेक्षयैवेति** । आकाशकालादिव्यापकद्रव्यभिन्नपृथिव्यादिद्रव्यापेक्षया । आकाशकालदिगात्मानो विभुद्रव्याणि ॥ ५ ॥

**अनुस्यूतानीति** । 'षिवु तन्तुसन्ताने' इति धातो रूपम् । यथा मणयः सूत्रस्यूतास्तथा भूतानि परमात्मस्यूतानि । तन्मुखेन–तद्द्वारा । अस्याधिकारिण इति । सर्वभूतात्मदर्शिनो विदुष इत्यर्थः । **व्याप्तिमात्रपरमिति** । सर्वभूतेष्विति सप्तम्याधारद्योतिका । वैषयिक औपश्लेषिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । तत्र तृतीयोऽभिव्यापकरूपोऽत्राधारो ग्राह्यः । यथा सर्वस्मिन्नात्मास्तीत्युदाहरणेऽभिव्यापकरूपाधारस्तेन च सर्वत्रात्मा व्याप्त इत्यर्थः । तथात्रापि सर्वभूतव्याप्त आत्मेत्यर्थः । न तु कटे पुस्तकमितिवत् सर्वभूताधिकरण आत्मा । तस्यान्याधिकरणकत्वाभावात् । स्वे महिम्नि ( छां. ७।२४।१ ) इति श्रुत्यात्मन आत्मैवाधिकरणम् । **अध्याहार्य इति** । यत्तदोर्नित्यसंबन्धात् । ननु पञ्चम्यास्तसिरित्यनेन पञ्चम्यर्थे तसेर्विधानात्तत इत्यस्य तेष्विति सप्तम्यन्तः पर्यायशब्दः कथमत आह–**सप्तम्यर्थ इति** । तसेः सार्वविभक्तिकत्वात्तथार्थेपि नासमञ्जसम् । **विजुगुप्सत इति** । गुपेर्निन्दायामित्यनेन निन्दार्थे सन् । **स्वात्मविभूतिन्यायेनेति** । ज्ञानिनः सर्वभूतमयत्वे कस्याप्यन्यस्य निन्दायां स्वस्यैव निन्दा स्यादिति भावः ॥ ६ ॥

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

एवं वैयधिकरण्येनोक्तं सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येनापि द्रढयंस्तदनुध्यानस्य सद्यः शोकनिवर्तकत्वमाह---यस्मिन्निति । यस्मिन्प्रणिधानसमये विजानत ईशा वास्यमित्यारभ्य ततो न विजुगुप्सत इत्यन्तेनोपदिष्टं स्वतन्त्रं परतन्त्रं वस्तुभेदं यथोपदेशं विविच्य जानत इत्यर्थः । नन्वेवमत्यन्तभेदाभ्युपगमे सर्वाणि भूतान्यात्मैवाभूदिति सामानाधिकरण्यं भज्येतेत्याशङ्कावारणाय–यस्य पृथिवी शरीरम् । [ बृ० ३ । ७ । ३ ] यस्यापः शरीरम् [ बृ० ३ । ७ । ४ ] इत्यादिघटकश्रुतिसिद्धसंबन्धविशेषमाह—एकत्वमनुपश्यत इति । आकृतिव्यक्त्योरिव गुणगुणिनोरिव चात्यन्तभिन्नयोरेव जगद्ब्रह्मणोरेकत्वं विभागानर्हसंबन्धविशेषं पश्यतो विशदमनुध्यायत इत्यर्थः । रामसुग्रीवयोरैक्यं देव्यर्थं समजायत । इत्यादाविवेहाप्येकशब्दस्य संबन्धविशेष एवार्थो विवक्षितुं युक्त इति भावः ।

---

**एवमिति** । पूर्वस्मिन् षष्ठमन्त्रे सर्वभूतान्यात्मन्येवानुपश्यतीति आधाराधेयभावेन भूतात्मनां भेदं प्रदर्श्य वैयधिकरण्यमुक्तम् । अस्मिन्मन्त्रे भूतान्यात्मैवेति समानविभक्तिकत्व त्सामानाधिकरण्यमुच्यते । **प्रणिधानसमय इति** । समाधावित्यर्थः । **इत्यन्तेनेति** । षड्भिर्मन्त्रैः । **स्वतन्त्रमिति** । भगवान् स्वतन्त्रः । तदितरवस्तुसमुदायो भगवदधीनत्वात्परतन्त्रः । विशिष्टाद्वैतिमते जगद्ब्रह्मणोरत्यन्ताभेदो न संगच्छते यतस्तन्मते हि चिदचिदीश्वरेति पदार्थत्रयम् । ईश्वरस्य शरीरमचिच्चिदपरपर्यायं जीवपृथिव्यादिकम् । तत्र च प्रमाणं यस्य पृथिवी शरीरमित्यादिकं बृहदारण्यकवचनम् । तेन शरीरशरीरिणोर्विभागानर्हत्वरूपं सर्वाणि भूतान्यात्मैवाभूदिति सामानाधिकरण्यं ग्राह्यं न तु मुख्यं सामानाधिकरण्यं ग्राह्यमिति शंकासमाधानाभ्यां प्रतिपादयति–**नन्वित्यादिना** । **आहेति** । यस्य पृथिवी शरीरमित्यादिवाक्ये बोधितो यः संबन्धविशेषो जगद्ब्रह्मणोः शरीरशरीरित्वरूपः । तद्द्वारैक्यं जगद्ब्रह्मणोर्न त्वत्यन्ताभेद इति एकत्वमनुपश्यत इत्यनेन मन्त्र आह । **आकृतिव्यक्त्योरिवेति** । यथा घटघटत्वयोर्जातिव्यक्त्योर्नीलघटयोश्च गुणगुणिनोरत्यन्तभिन्नयोरप्यैक्यं वक्तुं शक्यं तद्वत् जगद्ब्रह्मणोः शरीरशरीरिणोरप्यैक्यं वक्तुं युक्त म् । **विभागानर्हसंबन्धविशेषमिति** । जातिव्यक्त्योर्गुणगुणिनोश्च विभागो यथा भवितुं नार्हति अयुतसिद्धत्वेन समवायसंबन्धघटितत्वात्तथा शरीरशरीरिभूतयोर्जगद्ब्रह्मणोर्विभागो भवितुं नार्हतीत्यर्थः । अन्यत्राप्यैक्यशब्दः संबन्धविशेषवाचकत्वेन प्रसिद्ध इत्याह–**रामसुग्रीवयोरिति** । यथा देव्यर्थं जानक्यर्थं रामसुग्रीवयोरैक्यमभूदस्मिन् वाक्ये

एवं च सर्वाणि भूतान्यात्मैवाभूदिति सर्वभूतशरीरकः प्रतीतोऽभूदित्यर्थः। तत्रादौ प्रणिधानसमये को मोहः। स्वतन्त्रतादिभ्रमादिलक्षणो मोहो न संभवति। कः शोकः परमात्मविभूतितयावगते सर्वस्मिन्निर्ममत्वसिद्धौ पुत्रादिमरणराज्यादिहरणादावपि न कश्चिच्छोकः स्यादित्यर्थः। यथाह–यस्य मे चास्ति सर्वत्र यस्य मे नास्ति किंचन। मिथिलायां प्रदीप्तायां न मे किंचन दह्यते॥ इति। अत्र केचित्सर्वाणि भूतान्यात्मैवाभूदिति बाधायां सामानाधिकरण्यम्। तथा च सर्वाणि भूतान्यात्मव्यतिरिक्तानि न सन्तीत्यर्थः। यथा चोरः स्थाणुरिति। स्थाणुरेवायं न चोर इत्यर्थः। तथेहापीत्याहुः। अन्ये तु नरपतिरेव सर्वे लोका इतिवदौपचारिकमिदं सामानाधिकरण्यम्। नरपत्यधीनाः सर्वे जना इति हि तन्निर्वाहस्तद्वदिहापि परमात्माधीनानि सर्वाणि भूतानीति भाव इति वर्णयन्ति। अपरे तु घटशरावादयः सर्वे मृत्पिण्डा एवेतिवज्जगद्ब्रह्मणोरेकद्रव्यत्वं परिकल्प्यैवेदं

---

ऐक्यमिति पदेन जानकीप्राप्तिरूपैककार्यकर्तृत्वमिति संबन्धविशेषो द्योत्यते न तु रामसुग्रीवशरीरादिसर्वाभेदः। तथा भूतान्यात्मैवाभूदित्यत्र शरीरशरीरित्वविभागायोग्यतारूपो विशिष्टसंबंधो द्योत्यत इत्यभिप्रायः। **स्वतन्त्रतादीति**। अहं स्वतन्त्रो न भगवत्परतन्त्र इति भगवानपि परतन्त्र इति च जीवभ्रमः। भ्रमादीत्यादिपदेन संशयविपर्ययमिथ्याज्ञानानां ग्रहणम्। **पुत्रादिमरणेत्यादि**। पुत्रराज्यादिकं सर्वं भगवद्विभूतिरूपं न मदीयं तत्रास्ति किंचिदिति बुद्धौ दृढायां पुत्रमरणादिजन्यं दुःखं न संभवति। अत्रार्थे जनकानुभवं संवादयति। **यथेति**। यस्य मे चास्ति सर्वत्रेति जनको याज्ञवल्क्यं प्रति स्वानुभवं निवेदयति। मतान्तराणि प्रदर्श्य खण्डयति–**अत्र केचिदिति**। केचिदद्वैतमतानुयायिनः। ते हि–अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते–इति मत्वा शुक्तौ रजतमिवाध्यारोपितं सर्वं जगद्ब्रह्मणि तत्--सर्वाणि भूतान्यात्मैवेति ज्ञानेन बाध्यते। एवं च यथा रजतं शुक्तिरेवेति तथा भूतान्यात्मैवेति बाधार्थं सामानाधिकरण्यं इति वदन्ति। बाधायामिति निमित्तार्थे सप्तमी। बाधनिमित्तं सामानाधिकरण्यमित्यर्थः। **न चोर इत्यर्थ इति**। चोरः स्थाणुरिति सामानाधिकरण्यघटिते वाक्ये चोरं बाधित्वा स्थाणुरूपार्थो यथा स्थिरीक्रियते तद्वद् भूतान्यात्मैवेति वाक्ये भूतानि बाधित्वा केवलं ब्रह्मरूपोर्थः स्थिरीक्रियत इति भावः। **अन्य इति**। भेदवादिन इत्यर्थः। तन्मतं हि जीवादिकं सर्वं भगवदधीनं, अभेदश्चौपचारिक इति। औपचारिकं–लाक्षणिकम्। **तन्निर्वाह इति**। नरपत्यधीनाः सर्वे लोका इति हि नरपतिरेव सर्वे लोका इति सामानाधिकरण्यस्यार्थः। **अपर इति**। शुद्धाद्वैतवादिन इत्यर्थः। ते हि भगवान् सर्वं जगज्जातं लीलार्थं स्वयमेव स्वस्मादुत्पादयति अग्निविस्फुलिंगन्यायेन तदुत्पत्तिः श्रुतौ बोधितेति च वदन्ति। भास्कर-

सामानाधिकरण्यं निर्वाह्यमित्याचक्षते । सिद्धान्तस्तु देवोऽहं मनुष्योऽहमित्यादिवच्छरीरात्मभावसंबन्धेनैव जगद्ब्रह्मणोः सामानाधिकरण्यनिर्वाहे संभवति सति बाधोपचारस्वरूपैक्यपक्षा वैदिकैर्बहिष्कार्याः ॥ ७ ॥

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधा-**
**च्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

पुनरप्येनमीशेशितव्यवेदिनं वेदितव्येश्वरस्वहेयशोधनेन विशिष्टज्ञानयोगादिकमप्युपदिशति—स पर्यगादिति । यः सर्वभूतान्तरात्मब्रह्मदर्शी स पर्यगात्प्राप्नुयादित्यर्थः । 'ब्रह्मविदाप्नोति परम्' [ तै० २।१।१ ] इति न्यायात् । यद्वा समाधिलब्धेनानुभवेन प्राप्नुयादिति सिद्धानुवादः । 'अत्र ब्रह्म समश्नुते '। [ बृ० ४ । ४ । ७ ] इतिवत् । शुक्रमवदातं स्वप्रकाशमित्यर्थः । अकायम् । सर्वशरीरकमपि कर्मकृतहेयशरीररहितमित्यर्थः । न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा । इति हेयशरीरस्यैवान्यत्र प्रतिषेधदर्शनात् । न तु दिव्यमङ्गलविग्रहरहितमित्यर्थः । 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि ।' [ ई० वा० १६] 'य एषोऽन्तरा

---

मतमप्येतद्भवितुमर्हति । **सिद्धान्तस्त्विति** । 'विशिष्टाद्वैतिमतामित्यर्थः । देवोऽहं मनुष्योहमिति वाक्ये शरीरसंबन्धेन देवत्वादिकमात्मनोभिलप्यते । शरीररहितात्मनस्तु देवत्वादिभावो दुर्घटः । व्याप्तित्वात्तस्य । एवमेव भूतान्यात्मैवेति सामानाधिकरण्यं शरीरशरीरिभावेनाभिलप्यम् । **बाधेत्यादि** । बाधपक्षोऽद्वैतिनाम् । उपचारपक्षो भेदवादिनाम् । स्वरूपैक्यपक्षः शुद्धाद्वैतिनाम् । भास्करस्य च । **बहिष्कार्या इति** । वेदयाथार्थ्यविद्भिर्नाङ्गीकार्या इत्यर्थः ॥ ७ ॥

**ईशेशितव्यवेदिनमिति** । ईशो भगवान् । ईशितव्यं जगत् । तयोः शरीरशरीरित्वेन यज्ज्ञानं तद्युक्तमित्यर्थः । **वेदितव्येश्वरस्वहेयशोधनेनेति** । वेदितव्येश्वरस्य यत्स्वं शुक्रमित्यादिरूपं हेयं व्रणस्नाय्वादिविशिष्टत्वरूपं च तत्पृथक्कृत्येत्यर्थः । **सर्वभूतान्तरात्मेति** । सर्वभूतेषु चात्मानमित्युक्तेः । पर्यगादिति भूतकालबोधकरूपस्य प्राप्नुयादित्यर्थः कथमित्यत आह–**इति न्यायादिति** । 'व्यत्ययो बहुलम्' ( पा. सू. ३ । १ । ८५ ) इति पाणिनिसूत्रेण कालव्यत्ययस्यानुज्ञानात् ब्रह्मविदाप्नोति परमिति वाक्ये अप्नोतीत्यस्य यथाप्नुयादित्यर्थस्तथात्रापीति भावः । **सिद्धानुवाद इति** । सिद्धस्यैव पुनः कथनमित्यर्थः । समश्नुत इत्यस्य समश्नुवीतेत्यर्थः । अस्मिन्मते ब्रह्मणश्चिदचिदात्मकं शरीरमङ्गीक्रियत एव । ततः कथमकायमित्यतो व्याख्यानं– **सर्वशरीर-**

दित्ये हिरण्मयः पुरुषो दृश्यते ॥' [ मै० ६ । १ ] आदित्यवर्णं तमसः परस्तात् [ श्वे० ३ । ८ ] इत्याद्युपनिषत्प्रसिद्धस्याप्राकृतविग्रहस्य निषेधायोगादिति भावः । अव्रणम् । कर्मजन्यशरीराभावादेवाक्षतम् । अस्नाविरं च । स्नावाः शिरा यस्मिन्विद्यन्ते तत्स्नाविरम् । स्नाविरं न भवतीत्यस्नाविरम् । शुद्धम् । अनाघ्राताज्ञानादिदोषगन्धम् । अशनायादिषडूर्मिरहितं च । अपापविद्धम् । अज्ञानादेः कार्यकारणभूतैः पुण्यपापरूपकर्मभिरलीढमित्यर्थः । 'न शोको न सुकृतं न दुष्कृतम्' [ छां० ८ । ४ । १ ] इत्यारभ्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति पापशब्देनोपसंहारदर्शनात् । स्वर्गादिहेतुभूतविशेषस्यापीह पापशब्देन संग्रहणमिति भावः । एवमहेयहेयप्रत्यनीकं परमात्मानं स विद्वान्पर्यगादिति पूर्वेण संबन्धः । एवंरूपः परमात्मा प्राप्यः प्रापक उपास्यश्च यस्य तं ब्रह्मविदं विशिनष्टि कविः । व्यासादिवद्ब्रह्मस्वरूपरूपदिव्यगुणादिप्रकाशकप्रबन्धविशेषाणां निर्मातेत्यर्थः । अथवा क्रान्तदर्शी । कर्मयोगस्तु–कुर्वन्नेवेह कर्माणीति मन्त्रेण पुरस्तादेवोक्तः । अथ ज्ञानयोगसाध्यप्रत्यगात्मसाक्षात्कारहेतुभूतं जीवात्मयोगमाह–मनीषी मनस ईशित्री बुद्धिर्मनीषा, तद्वान्मनीषी भगवत्स्वरूपगुणस्मृत्यभ्यासेन तदितरविषयवैराग्येण च प्रतिष्ठितप्रज्ञ इत्यर्थः । परिभूः कामक्रोधादीन्परिभवतीति परिभूः । अनेन विरोधिनिवृत्तिरूपयोगाङ्गसेवनमुक्तम् । योगाभ्यासफलमाह–-स्वयंभूः । अन्यनिरपेक्षसत्ताकः सुखरूप-

---

**कमपीति**। यद्यपि चिदचिदात्मकं सर्वं ब्रह्मणः शरीरं तथापि देवदत्तादिजीववत्तस्य सुकृतदुष्कृतकर्मभोगानुकूलं हेयं शरीरं नास्तीत्यर्थः । **निषेधायोगादिति** । शाब्दप्रमाणवादिभिर्वेदे प्रतिपादितभगवद्दिव्यमङ्गलशरीरं निषेद्धुं न शक्यत इति भावः। **अशनायादीति**। अशनाया-भोजनेच्छा । षडूर्मयश्च-क्षुत्पिपासे जरामृत्यू शोकमोहौ षडूर्मय इति व्यासोक्तः । **कार्यकारणभूतैरिति**। अल्पाच्तरत्वात्कार्यशब्दस्य पूर्वनिपातः। पूर्वजन्मगतं सुकृतदुष्कृतमग्रिमजन्मगताज्ञानादीनां कारणं ततस्तज्जन्मगताज्ञानादीनां तदग्रिमजन्मगतदोषाः कार्यमित्यर्थः। अलीढं-अव्याप्तम्। **उपसंहारदर्शनादिति**। उपक्रमोपसंहारयोरैक्यस्यापेक्षितत्वात्पापशब्देनैवोपसंहारे सुकृतस्य ग्रहणं कर्तव्यमित्यर्थः । **अहेयहेयेति**। अहेयमनुपेक्षणीयं सुकृतमित्यर्थः । हेयमुपेक्षणीयं दुष्कृतमित्यर्थः । **ब्रह्मस्वरूपेत्यादि**। ब्रह्मस्वरूपं सर्वव्यापकसर्वान्तर्यामित्वम्। रूपं–दिव्यमङ्गल-

तया स्वात्मदर्शीति यावत् । याथातथ्यतः । यथावद्विविच्य । अर्थान्प्र- ष्टव्यार्थान् । तस्य वाचकः प्रणवः ( यो. सू. १।२७ ) तज्जपस्तदर्थ- भावनम् ( यो. सू. १।२८ ) इतिसूत्रोक्तान्व्यदधाद्धृदयेन धृतवानित्यर्थः। सर्वान्तरायप्रशमनार्थमिति भावः । यद्वा शुक्रमित्यादि द्वितीयान्तपदजातं परिशुद्धजीवपरम् । तमपि स परमात्मा पर्यगात्परितो व्याप्य स्थित इति प्रथमान्तपदजातं परमात्मपरं योजनीयम् । तथाहि कविः सर्वदर्शी श्रीपञ्च- रात्रादिप्रणेतेति वा । मनीषी मनःप्रभृतीनां जीवकरणानां नियन्ता । परितो भवतीति परिभूः सर्वव्यापी । स्वयमेव संभवतीति स्वयंभूः । ब- हुधा विजायत इतिश्रुत्युक्तप्रसिद्धावतारशाली । अत्र कविरित्यादिना कल्याणगुणविधानात् । छान्दोग्ये—'एष आत्मापहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोपिपासः [ छा० ८।१।५ ] इति हेयगुणान्प्र- तिषिध्य सत्यकामः सत्यसंकल्प इति कल्याणगुणविधानाच्च निर्गुणं निरञ्जनमित्यादिसामान्यनिषेधस्य हेयगुणविषयत्वं सुगमम् । याथातथ्यत इति । अर्थान्कार्यपदार्थाञ्शाश्वतीभ्यः समाभ्यो यावद्विलयमवस्थातुं याथातथ्यतो यथावद्विविच्योत्पादितवान्न पुनरैन्द्रजालिकत्वेन बलं प्रका- शितवानिति भावः ॥ ८ ॥

---

विग्रहः । दिव्यगुणाः—अनन्तकल्याणगुणाः । प्रबन्धविशेषाः—ग्रन्थविशेषाः । तस्य वाचकः प्रणवः । तज्जपस्तदर्थभावनम् । इति सूत्रे । ईश्वरस्य वाचकः प्रणवः । ईश्वरः प्रणवस्य वाच्यः । इति प्रथमसूत्रार्थः । विज्ञातवाच्यवाचकभावेन योगिना प्रणवस्य जपः कार्यस्तथा प्रणवाभिधेयस्येश्वरस्य भावनं च कर्तव्यमिति द्वितीयसूत्रार्थः । तस्यास्य योगि- नः प्रणवं जपतः प्रणवार्थं भावयतश्चित्तमेकाग्रं संपद्यते । तथा चोक्तं वैयासिक्यां गाथायाम् । स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमासते । स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशत इति । अन्तरायाः—विघ्नाः । एतावता प्रबन्धेन शुक्रमित्यादिपदानि नपुंसक- लिङ्गयुतत्वेन प्रथमान्ततया च ब्रह्मवाचकत्वेन व्याख्यातानि । परं तेषां स इत्यनेन पुंलिङ्गघटितपदेनान्वयो न घटत इत्यरुचेराह—**यद्वेति** । परिशुद्धजीवः—मुक्तावस्थागतो जीवः । **पञ्चरात्रेति** । नारदपाञ्चरात्रादयो हि प्रसिद्धा आगमग्रन्थाः । करणानि— इन्द्रियाणि । **विजिघत्स इति** । अत्तुमिच्छा जिघत्सा पातुमिच्छा पिपासा तदुभय- रहितः । **सुगममिति** । निर्गुणत्वमित्यनेन यो गुणनिषेधः कर्तव्यः स पाप्मरजआदीनां हेयगुणानामेव न कल्याणगुणानां सत्यकामत्वादीनाम् । श्रुतिविहितगुणविधानवैयर्थ्यापत्तेः।

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥ ९ ॥

एवं विचित्रशक्तिकपरमात्मविषयां कर्मयोगाद्यङ्गिकां विद्यामुपदिश्यानन्तरं त्रिभिर्मन्त्रैः केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च पुरुषान्विनिन्दन्वर्णाश्रमधर्मानुगृहीतया विद्ययैव निःश्रेयसावाप्तिमाह-अन्धमिति । बृहदारण्यके चायं मन्त्रः पठितः। ये भोगैश्वर्यप्रसक्ता अविद्यां विद्यान्यां क्रियां केवलं कर्मेत्यर्थः । विद्याविधुरं कर्मेति यावत् । अविद्या कर्मसंज्ञान्येति स्मृतेः । उपासते अनुतिष्ठन्ति । अन्धं तमोऽतिगाढं तमोऽज्ञानमित्यर्थः । त्रिवर्गाभिसङ्गान्नान्तरीयं नरकमन्धं तमो वा । "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति" (मुं. १ । २ । ७ ) इति श्रुतेः । य उ विद्यायां रताः । उकार उत्तरपदेनान्वेतव्यः । स्वाधिकारोचितकर्मपरित्यागेन विद्यायामेव रताः । ते ततः कर्ममात्रनिष्ठाः प्राप्यादन्धतमसाद् भूय इव तमस्तदधिकमज्ञानं प्रविशन्ति । इवशब्दस्तमस इयत्ताया दुर्ग्रहत्वं द्योतयति ॥ ९ ॥

---

निषेधस्य तु न वैयर्थ्यं हेयगुणपरत्वेनोपपत्तेः । **ऐन्द्रजालिकत्वेनेति** । मायावादिमतखण्डनमेतत् । ते हि माययोपाधिद्वारा भगवति गुणानां सत्त्वं ब्रुवते । इन्द्रजालं-माया । तेन चरति स ऐन्द्रजालिकः । यथा मायावी वस्तुतोऽसन्तमप्यर्थजातं द्रष्टृदृष्टिभ्रमोपादानकमुत्पादयति तद्वदुपाधिद्वारा भगवत्यविद्यमाना अपि गुणा भासन्त इति मायावाद्यभिप्रायः॥८॥

**वर्णाश्रमधर्मानुगृहीतयेति** । वर्णाश्रमधर्मानुष्ठानसहितयेत्यर्थः । **पठित इति** । बृहदारण्यकं ब्राह्मणान्तर्गतत्वेनास्याः संहितोपनिषदो व्याख्यानम् । तत्र च प्रतीकरूपेण मन्त्रस्यास्य पाठः । विद्याविधुरं-विद्यारहितम् । **त्रिवर्गाभिसंगादिति** । धर्मार्थकामेषु मोक्षरहितेष्वासक्तेः । ब्रह्मलोकपर्यन्तसाधकान्यपि कर्माणि क्षयिफलतया प्लवा ह्येत इति श्रुत्या निन्द्यन्ते । श्रुत्यर्थश्च-षोडश ऋत्विजः । पत्नी यजमानश्चेत्यष्टादश कर्तॄनाश्रित्य विहितमवरं फलाभिसन्धिमत्तया अश्रेष्ठं कर्म येषु यजमानेषु वर्तते ते यज्ञप्रधानाः पुरुषा जीर्णनौका इव संसारार्णवसंतरणासमर्था इत्यर्थः । यद्वा, अष्टादशस्मृत्युक्तं स्मार्तं कर्म येषु श्रौतकर्मसु तदधिकारसंपादकत्वेनावरमंगभूतं भवति तान्यपि श्रौतानि यज्ञात्मकानि कर्माणि शोकाम्बुतरणे साधनानि न भवन्तीत्यर्थः । एतत्कर्म श्रेयःसाधनं मत्वा ये हृष्यन्ति ते जरामृत्युं च भूयोभूयो गच्छन्ति ॥ **उत्तरपदेनेति** । विद्यायामित्युत्तरपदेन उइत्यस्यान्वयः कर्तव्यः । उपदमेवार्थे । तदाह **विद्यायामेवेति** । स्वाधिकारोचितवर्णाश्रमादिकर्म परित्यज्य केवलं विद्यायामेव रता इत्यर्थः । **दुर्ग्रहत्वमिति** । इयत्ता-मर्यादा । इयत्तम इति वक्तुं न शक्यत इत्यर्थः ॥ ९ ॥

अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

किं तर्हि मोक्षसाधनमित्यत्राह—अन्यदेवेति। विद्ययेति पञ्चम्यर्थे तृतीया। यथाश्रुतेऽन्यशब्दानन्वयादन्यदेवाहुः संभवादिति वक्ष्यमाणानुरोधाच्च। तथा च विद्यायाः कर्मरहितविद्यातोन्यन्मोक्षसाधनमित्याहुः। उपनिषद इति शेषः। अविद्यया। अविद्यायाः। ब्रह्मविद्याविधुरकर्मणोन्यदेव मोक्षसाधनमित्याहुः। पूर्वपूर्वसंप्रदायासिद्धोऽयमर्थोऽस्माकमित्याह—इति शुश्रुमेति। ये पूर्वाचार्यास्ते प्रणिपातादिभिः सम्यगुपसन्नानामस्माकं तन्मोक्षसाधनं विचचक्षिरे विविच्योपदिदिशुः। तेषां धीराणां धीमतां परमात्मध्यानपराणां वचनमित्यध्याहार्यम्। यद्वा धीराणामिति पञ्चम्यर्थे षष्ठी। तेभ्यो धीरेभ्य इति योज्यम्। नटस्य शृणोतीतिवत्। इति शुश्रुम एवंप्रकारमश्रौषम्। ननु परोक्ष एवार्थे लिड्विधानाच्छुश्रुमेत्युत्तमपुरुषो न घटत इति चेत्सत्यम्। ब्रह्मविद्याया दुरवगाहत्वेन निःशेषग्रहणमस्माभिर्न

---

**पञ्चम्यर्थे तृतीयेति**। मन्त्रगततृतीयां विपरिणमय्य पञ्चमी कर्तव्येत्यर्थः। तत्रोपोद्बलकमाह–**यथाश्रुत इति**। अयं भावः। अन्याराादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते (पा. सू. २।३।२९) इति पाणिन्यनुशासनादन्यत्पदसमीपे पञ्चम्या आवश्यकत्वं तेन तदनुरोधेन तृतीयास्थाने पञ्चमी कार्या। किंच प्रकरणानुरोधादप्यत्र पञ्चमी आवश्यकी यतोन्यदाहुरसंभवादिति समानार्थके त्रयोदशे मन्त्रे असंभवादिति पञ्चम्या एव कथनात्। **शेष इति**। आहुरित्यस्य कर्तृपदमुपानेषद इत्यध्याहर्तव्यमित्यर्थः। **पञ्चम्यर्थे षष्ठीति**। नियमपूर्वकविद्यास्वीकारे वक्तापादानसंज्ञको भवतीत्यर्थकेन–आख्यातोपयोगे (पा. सू. १।४।२९) इति पाणिनिसूत्रेणापादानसंज्ञायां अपादाने पञ्चमी (पा. सू. २।३।२९) इत्यनेन धीरपदं पञ्चम्यन्तमपेक्ष्यत इत्यर्थः। पञ्चम्यर्थे षष्ठीत्यत्र दृष्टान्तमाह–**नटस्येति**। नटादुपयुक्तं नटसूत्रादकं शृणोतीत्यर्थो बोध्यः। उपयोगाभावे तु यथाश्रुतं षष्ठ्यन्तं साध्वेव। **न घटत इति**। या क्रिया परोक्षे जायमाना तत्र वाच्यायाः परोक्षे लिट् (पा. सू. ३।२।११५) इत्यनेन लिड्विधीयते। उत्तमपुरुषेतु चित्तविक्षेपादिना पारोक्ष्यमिति व्याख्यानात् बहु जगद पुरस्तात्तस्य मत्ता किलाहमितिवदत्रेति शुश्रुमेतिवाक्ये चित्तविक्षेपजन्यत्वं बोधितं ततश्चास्य वाक्यस्याप्रामाण्यापातः इति शङ्का तामङ्गीकृत्योत्तरयति–**सत्यमिति**। ब्रह्मविद्याया दुरवगाहत्वाद्दुर्ज्ञानत्वादस्मा-

कृतमित्यभिप्रायकत्वादुत्तमपुरुषप्रयोगस्येत्याहुः ॥ १० ॥

विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ ११ ॥

अन्यदिति सामान्येनोक्तं मोक्षसाधनं विवृणोति--विद्यामिति । कुर्वन्नेवेह कर्माणीति मन्त्रे कर्मयोगस्य प्रत्यगात्मदर्शनद्वारा परभक्त्युत्पादकत्वमुक्तम् । इह भक्तियोगेन विदुषा पूर्वोक्तकर्मयोगं परित्यज्याहरहरनुष्ठीयमानानां नित्यनैमित्तिककर्मणां कल्मषनिबर्हणद्वारा भक्त्युपचायकत्वमुच्यते । सहशब्दस्वारस्यात् । अतो न पुनरुक्तता । यो यथावस्थितविद्योपदेशवान् । विद्यां ब्रह्मोपासनरूपां तदङ्गभूतकर्मरूपामविद्यां चैतदुभयं सह वेद । अङ्गाङ्गिभावेन सहानुष्ठेयं वेदेत्यर्थः । अविद्यया विद्याङ्गतया चोदितेन कर्मणा मृत्युं विद्योत्पत्तिप्रतिबन्धकीभूतं पुण्यपापरूपं प्राक्तनकर्म तीर्त्वा निर्विशेषमुल्लङ्घ्य । विद्यया परमात्मोपासनरूपया । अमृतमश्नुते मोक्षं प्राप्नोतीत्यर्थः । तीर्त्वेत्यत्रोपायविरोधितरणमुच्यते । अमृतमश्नुत इत्युपेयब्रह्मप्राप्तिविरोधिभूतेभ्यः सर्वपापेभ्यो मोक्ष इति भेदः । एवं च सति—इयाज सोऽपि सुबहून्यज्ञाञ्ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥ ( वि. पु. ६।६।१२ ) इति । ज्ञानव्यपाश्रयः शास्त्रश्रवणजन्यब्रह्मज्ञानवान्स जनकोऽपि ब्रह्मविद्यां निदिध्यासनरूपामधिष्ठाय फलत्वेनाश्रित्येत्यर्थः । भक्तियोगोत्पत्तिं कामयमान इति यावत् । मृत्युं भक्त्युत्पत्तिविरोधि प्राचीनं कर्मजातम् । अविद्यया विद्याङ्गकर्मणा तर्तुं

---

भिरपि सा निःशेषतया न गृहीतेत्येवं चित्तव्याघातादिना पारोक्ष्यं संपादनीयमिति भावः ॥ १० ॥

**पूर्वोक्तकर्मयोगमिति** । प्रत्यगात्मदर्शनद्वारा परमभक्त्युत्पादकं कर्मयोगमित्यर्थः । **नित्यनैमित्तिककर्मणामिति** । अहरहः संध्यामुपासीतेति विहितानि नित्यकर्माणि । राहूपरागे स्नायादित्यादिविहितानि नैमित्तिककर्माणि । कल्मषनिबर्हणं–पापनाशः। भक्त्युपचायकत्वं–भक्त्या समुचितत्वम् । **न पुनरुक्ततेति** । पूर्वं भक्त्युत्पादककर्माण्युक्तानि । अधुना भक्तिसमुचितकर्माण्युच्यन्ते इति भेदात्पुनरुक्त्यभावः । **अङ्गाङ्गिभावेनेति** । गुणप्रधानभावेनेत्यर्थः । **उपायविरोधीति** । उपायभूतं यद्विरोधिपदार्थस्य तरणमुल्लङ्घनम् । उपायः–साधनम् । उपेयं–साध्यं ब्रह्मप्राप्तिरूपम् । तद्विरोधीनि सर्वपापानि तेभ्यो मोक्षः । **ज्ञानव्यपाश्रय इति** । ज्ञानमेव व्यपाश्रय आलम्बनं यस्येत्यर्थः ।

व्यपोहितुं सुबहून्यज्ञाञ्ज्योतिष्टोमादिकानियाजाकरोत्। पाकं पचतीतिवत्॥ ११॥

अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते।
ततो भूय इव ते तमो य उ संभूत्याꣳ रताः॥ १२॥

एवं समाधिनिष्पत्तेर्नित्यनैमित्तिककर्मसाध्यत्वमुक्त्वाथ त्रिभिर्मन्त्रैर्निषिद्धनिवृत्तिरूपयोगाङ्गसाध्यत्वमाह। तत्र तावत्प्राग्वदेकैकमात्रं विनिन्दति-अन्धमिति। 'एतमितः प्रेत्याभिसंभवितास्मि' [छा० ३।१४।४]। 'ब्रह्मलोकमभिसंभवामि (छा० ८।१३।१) इत्यादिषु ब्रह्मप्राप्तिरूपानुभूतिः संभूतिशब्देनोक्ता। इह तु समाधिरूपा संभूतिशब्देनोच्यते। असंभूतिशब्दस्तु समाध्यङ्गभूतां निषिद्धनिवृत्तिमाह। संभूतिं च विनाशं चेत्युदत्र विनाशशब्देनासंभूतेरनुविधानात्। तथा च ये विद्याधिकारिणोऽसंभूतिमेव मानदम्भहिंसास्तेयादीनां योगविरुद्धानां निवृत्तिमेवोपासते निवृत्तिमात्रनिष्ठा इत्यर्थः। तेऽन्धं तमः प्रविशन्तीति पूर्ववदर्थः। ये पुनः समाधिरूपसंभूत्यामेव रतास्ते ततो भूय इव तमः प्रविशन्तीत्यर्थः॥ १२॥

अन्यदेवाहुः संभवादन्यदाहुरसंभवात्।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे॥ १३॥

किं तर्हि मोक्षसाधनमित्यत्राह— अन्यदेवेति। संभवात्संभूतेः। असंभवादसंभूतेरित्यर्थः। केवलात्संभवादसंभवाच्चान्यदेव मोक्षसाधनमित्युपनिषद आहुः। लिङ्गुत्तमः पूर्ववत्। शिष्टं स्पष्टम्॥ १३॥

---

अधिष्ठाय–अवलम्ब्य। **अकरोदिति**। यज् धातोः कथं सामान्यतोकरोदित्यर्थोतो दृष्टान्तमाह- **पाकं पचतीतिवदिति**। विशेषणवाचकपदसमभिव्याहारे विशिष्टवाचकपदस्य विशेष्यमात्रबोधकत्वमिति भावः। तथा च पाकं करोतीत्यत्र विक्लित्यनुकूलव्यापारवाचकपचेः (पच्धातोः) विक्लित्यर्थकपाकपदसमभिव्याहाराद्व्यापारमात्रबोधकत्वं यथा भवति तथा प्रकृते देवतोद्देशपूर्वकद्रव्यत्यागानुकूलव्यापारवाचकयजेः (यज्धातोः) विशेषणीभूतदेवतोद्देशपूर्वकद्रव्यत्यागरूपार्थकयज्ञपदसमभिव्याहाराद्विशेष्यीभूतव्यापारमात्रार्थकत्वम् ११

**समाधीत्यादि**। नित्यनैमित्तिककर्माणि साधनम्। समाध्युत्पत्तिः साध्यम्। सैव समाधिर्निषिद्धपदार्थवर्जनरूपेण योगाङ्गेन साध्यते। **अनुविधानादिति**। पुनः कथनादित्यर्थः॥ १२॥

**पूर्ववदिति**। दशममन्त्रव्याख्याने एतद्विषयकशङ्कोत्तरे व्याख्याते॥ १३॥

संभूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ।
विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते ॥ १४ ॥

अन्यादित्युक्तं विवृणोति—संभूतिमिति । संभूतिं समाधिरूपब्रह्मानुभूतिं विनाशं च योगविरोधिनां वर्जनं चेत्येतदुभयं यो विद्वानङ्गाङ्गिभावेन सह वेद स विद्वान्विनाशेन निषेव्यमाणेनेति शेषः । विरोधिनिवृत्तिरूपयोगाङ्गसेवनेनेत्यर्थः । मृत्युं समाधिविरोधिपापं तीर्त्वापाकृत्य निष्पन्नया संभूत्यामृतमश्नुते ब्रह्मप्राप्तिरूपां संभूतिमश्नुत इति भावः । अत्र संभूतिविनाशशब्दाभ्यां सृष्टिप्रलयविवक्षया कार्यहिरण्यगर्भस्याव्याकृतप्रधानस्योपासनं विधीयत इति शांकरं व्याख्यानमनुपपन्नम् । मृत्युतरणामृतत्वप्राप्तिरूपफलवचनानौचित्यात् ॥ १४ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥

एवं साङ्गभगवद्भक्तिमुपदिश्य तन्निष्ठस्यानुसंधेयमन्त्रद्वयमुपदिशति-हिरण्मयेनेति । हे पूषन्नादित्यान्तर्यामिन् । य आदित्ये तिष्ठन्नित्यारभ्य 'य आदित्यमन्तरो यमयति' [बृ. ३।७।९ ] इति शतपथश्रुतेः । शास्त्रदृ-

---

**अङ्गाङ्गिभावेनेति** । योगविरोधिवर्जनमङ्गम् । समाधिरूपब्रह्मानुभवोऽङ्गी । **शांकरं व्याख्यानमिति** । शांकरभाष्ये प्रकृतश्चतुर्दशो मन्त्रो वक्ष्यमाणरीत्या व्याख्यातः । यत एवमतः समुच्चयः संभूत्यसंभूत्युपासनयोर्युक्त एवैकपुरुषार्थत्वाच्चेत्याह–संभूतिं च विनाशं च यस्तद्वेदोभयꣳ सह । विनाशेन विनाशो धर्मो यस्य कार्यस्य स तेन धर्मिणाभेदेनोच्यते विनाश इति । तेन तदुपासनेनानैश्वर्यमधर्मकामादिदोषजातं च मृत्युं तीर्त्वा हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्तिः फलम् । तेनानैश्वर्यादिमृत्युमतीत्यासंभूत्याव्याकृतोपासनयामृतं प्रकृतिलयलक्षणमश्नुते । संभूतिं च विनाशं चेत्यत्रावर्णलोपेन निर्देशो द्रष्टव्यः । प्रकृतिलयफलश्रुत्यनुरोधात् ॥ **मृत्युतरणेत्यादि** । हिरण्यगर्भोपासनायाः फलं मृत्युतरणमव्याकृतप्रधानोपासनायाः फलममृतत्वप्राप्तिरित्युभयविधफलं न घटतेतः शांकरव्याख्यानमनुपपन्नमिति प्रकाशिकाकृदाशयः । वस्तुतः शांकरभाष्ये मृत्युपदेनानैश्वर्यादिफलं गृह्यते तथामृतपदेन प्रकृतिलयात्मकं फलं गृह्यते तेन न पूर्वोक्तानुपपत्तिः । अतः स्पष्टप्रतिपत्त्यर्थं शांकरभाष्यं पूर्वं संगृहीतम् ॥ १४ ॥

**तन्निष्ठस्येत्यादि** । भगवद्भक्तिनिष्ठेनैतन्मन्त्रद्वयं ध्येयमित्यर्थः । **शतपथेति** । शुक्लयजुर्वेदब्राह्मणम् । शास्त्रदृष्ट्येत्यादिवैयासिकसूत्रस्यायमर्थः । प्रज्ञातजीवभावेनेन्द्रेण मामेव विजानीहीति य उपदेशः कृतः स ऐतदात्म्यमिदं सर्वमिति शास्त्रदृष्ट्या सर्वात्म-

दृष्ट्या तूपदेशो वामदेववत् ( ब्र. सू. १।१।३१ ) इत्यादिन्यायाच्च । यद्वा पूषन्नाश्रितपोषणस्वभावेत्यर्थः । 'साक्षादप्यविरोधं जैमिनिः' [ ब्र०-सू० १।२।२९ ] इति सूत्रानुरोधात् । सत्यस्य । सत्यशब्देन स्वरूपविकाररहितजीवात्मोच्यते । सत्यं चानृतं च सत्यमभवत् [ छा० १।२।३ ] इत्यादिषु जीवेपि सत्यशब्दप्रयोगात् । तस्य मुखम् । मुखवत् । अनेकेन्द्रियावष्टम्भकतया मुखसदृशं मन इत्यर्थः । हिरण्मयेन हिरण्यसदृशेन भोग्यवर्गेणेति यावत् । पात्रेण परमात्मविषयकवृत्तिप्रतिरोधकेनापिहितमाच्छादितम् । हृदि निहिते परमात्मनि निरुद्धवृत्तिकं जातमित्यर्थः । तज्जीवस्य मुखस्थानीयं मनो हृषीकाणामीशस्त्वमपावृणु अनिरस्य तिरोधानं कुर्वित्यर्थः । तत्कस्य हेतोस्तत्राह—सत्यधर्माय सत्यस्य जीवस्य धर्मभूताय । दृष्टिर्दर्शनम् । त्वद्दर्शनायेति भावः ॥ १५ ॥

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह ।**
**तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ**
**पुरुषः सोऽहमस्मि ॥ १६ ॥**

पुनरपि तया दृष्ट्या द्रष्टव्यं विशिंषन्दर्शनं तत्साधनं चाभ्यर्थयते पूषन्नाश्रितपोषक । एकश्चासावृषिश्चैकर्षिः । अद्वितीयातीन्द्रियार्थद्रष्टा 'नान्योऽतोऽस्ति द्रष्टा' [ बृ. ३।७।२३ ] इति श्रुतेः । यमो यमयति

---

भावमवगम्य कृतः । यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं पश्यन्नहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेहं मनुरभवं सूर्यश्च ( बृ० १ । ४ । १० ) इति ॥ तथा प्रकृते पूषात्मकत्वेन निर्देशः । साक्षादपीति सूत्रस्यार्थः – जैमिनिस्त्वाचार्यो वैश्वानरशब्दवद् अग्निशब्दस्यापि परमात्मन एव साक्षादव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते ॥ तथा प्रकृते पूषन्शब्देन साक्षात्परमात्मनो वाचकत्वे न विरोध इत्यर्थः । **स्वरूपविकाररहितेति** । जीवे गुणतो विकारा भवन्ति न स्वरूपतः । अचित्पदार्थेषु स्वरूपतो विकारा भवन्ति । अवष्टम्भकं–बलप्रदत्वादाश्रयि । अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति श्रुत्या मनःसाहित्येनैवेन्द्रियवृत्त्युत्पत्त्या तन्मन इन्द्रियाणामाश्रयि । अतोवष्टम्भकमुच्यते । गौण्या वृत्त्या मुखपदेन मनो लक्ष्यते । **आच्छादितमिति** । हिरण्यादिभोग्यवर्गः परमात्मविषयां वृत्तिं रुणद्धि । हृषीकाणि—इन्द्रियाणि ॥ १५ ॥

**विशिंषन्निति** । द्रष्टव्यपरमात्मानं पूषन्नित्यादिविशेषणैः पूजयन्नित्यर्थः । परमेश्वरोऽद्वितीयोतीन्द्रियपदार्थानां द्रष्टेत्यर्थः । एकर्षिरित्यत्र– ऋषी दर्शने इति धातुः । सूर्ये

सर्वानिति यमः। सर्वान्तर्यामिन्। 'यः पृथिवीमन्तरो यमयति' [ बृ०-३।७।३ ] 'य आत्मानमन्तरो यमयति' [ बृ० ३।७।९ ] इत्यादिश्रुतेः। सूर्य स्वोपासकधियां सुष्ठु प्रेरक। प्राजापत्य प्रजापतिश्चतुर्मुखस्तस्य सुताः प्राजापत्यास्तेषामन्तर्यामिन्। यद्वा प्रजापतिरेव प्राजापत्यः। प्रजानां पतिरिति व्युत्पत्त्या प्रजापतिर्विष्णुः 'प्रजापतिश्चरति गर्भे अंतः' [ म० ना० ११ ] इति श्रुतेः। व्यूह रश्मीन्। भवदीयदिव्यरूपदर्शनानुपयुक्तान्स्वोग्ररश्मीन्व्यूह व्यपोह विगमयेत्यर्थः। यत्ते दर्शनौपयिकं प्रभात्मकं तेजस्तत्समूह समूहीकुरु। तत्किमर्थमित्याशङ्क्य द्रष्टुमिच्छामि ते रूपमित्याह यदिति यत्। 'आदित्यवर्णं तमसः परस्तात्' [ श्वे० ३।८ ] इत्यादिश्रुतिषु प्रसिद्धमित्यर्थः। ते। 'आनन्दो ब्रह्म' [ तै० ३।६ ] इति निरतिशयभोग्यस्य तवापि। कल्याणतमं सौन्दर्यादिगुणातिशयेन कल्याणेभ्योऽतिशयितं कल्याणं शुभाश्रयमिति भावः। ते यद्दिव्यरूपं तत्पश्यामि पश्येयमिति लकारव्यत्ययश्छान्दसः। द्रष्टुमिच्छामीति भावः। ननु 'यत्ते रूपं कल्याणतमम्'। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः'। [ छा० १-६।६ ] 'ईशा वास्यमिदꣳ सर्वम्' [ ई० १ ] 'पतिं विश्वास्यात्मेश्वरम्' [ म० ना० ११।३ ] "सर्वकर्मा सर्वगन्धः। स्वाभाविकी ज्ञानबलक्रिया च' [ श्वे० ६।८ ] 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' [ छा० ८।३।४ ] 'तस्योदिति नाम' [ छा० १।६।७ ] इत्यादिभिः शास्त्रैर्गुणविग्रहादयो ब्रह्मणो विधीयन्ते। निर्गुणं निरञ्जनम्। 'सत्यं ज्ञानम्' [ तै० २।१।१ ] 'अकायमव्रणम्।' [ ई० ८ ] 'नेह नानास्ति किंचन' [ बृ० ४।४।१९ ] 'निष्कलं निष्क्रियम्।' [ श्वे० ६।१९ ] 'अगोत्रमवर्णम्। [ मुं० १।१।६ ] एवमादिभिः शास्त्रैर्गुणादयः प्रति-

---

इत्यत्र षूञ् प्रेरणे इति धातुः। उग्रप्रकाशो हि वस्तुदर्शनविरोधीत्यत आह- **उग्ररश्मीन् व्यूहेति**। **छान्दस इति**। व्यत्ययो बहुलम् ( पा. सू. ३।१।८५ ) इति पाणिन्यनुशासनात्। तत्र हि-सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिद्ध्यति बाहुलकेन ॥ १ ॥ इति व्याख्यानादत्र व्यत्ययः। **शास्त्रैरिति**। वेदवाक्यैरित्यर्थः। **गुणविग्रहादय इति**। सर्वकर्मकारित्वादयो गुणाः विग्रहः शरीरं हिरण्मयः पुरुष इत्यादिवाक्यैरुक्तम्। **प्रतिषिध्यन्त इति**। निर्गुणमि-

षिध्यन्ते । तथा विधिनिषेधयोः शास्त्रयोर्विरोधादन्यतरबाधोऽवश्यंभावी । तत्र निषेधस्य प्रसक्तिपूर्वकतया पश्चात्प्रवृत्तं प्रतिषेधशास्त्रमपच्छेदाधिकरणन्यायेन प्रबलम् । अतः प्रतिषेधबलेन गुणादिविधयः सर्वे बाधिताः । ततश्च अविद्याख्यदोषपरिकल्पितगुणविग्रहादयो मिथ्याभूता इति । तदि-

त्यादिवेदवाक्यैर्गुणादयो ब्रह्मणि न सन्तीति प्रतिपाद्यते । अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वान्निषेधो यस्य तस्य पूर्वं प्राप्तिरपेक्ष्यते । घटं मानयेति निषेधो हि घटानयनप्राप्तिपूर्वको यथा तथा ब्रह्मणि गुणनिषेधः प्रतिपाद्यमानः पूर्वं गुणविधिरासीदिति दर्शयति । तथा च पूर्वं गुणविधिशास्त्रं प्रवर्तते ततो निषेधशास्त्रम् । पश्चात्प्रवर्तमानं शास्त्रं पूर्वप्रवृत्ताच्छास्त्रात्प्रबलमिति हि शास्त्रकृत्समयः । यतः पूर्वशास्त्रस्योत्पत्तिविधिरविरोधेनैव । तदानीं विरोधिनः परस्याभावात् । परशास्त्रस्योत्पत्तिस्तु विरोधेनैव । तदानीं विरोधिनः पूर्वस्य सत्त्वादिति विरोधेनोत्पन्नं परमेव प्रबलं भवति । **अपच्छेदाधिकरणन्यायेनेति** । अपच्छेदो विच्छेदः । पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति । अध्वर्युं प्रस्तोतान्वारभते । प्रस्तोतारं प्रतिहर्ता । प्रतिहर्तारमुद्गाता । उद्गातारं ब्रह्मा । ब्रह्माणं यजमानः । ( आ. श्रौ. सू. १२।१७।१ सत्या. श्रौ. सू ८.४।२२ ) इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते । बहिष्पवमानं प्रसर्पतां यद्युद्गातापच्छिद्येत । अदक्षिणः स यज्ञः संस्थाप्यः । तेन पुनर्यजेत तत्र दद्यात्पूर्वस्मिन्दास्यन्स्यात् । अथ प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्यादिति । अत्रोद्गातृप्रतिहर्त्रोरेकस्मिन् प्रयोगे युगपदपच्छेदे उद्गातुः प्राधान्यात्तत्प्रायश्चित्तेनैव निर्वाहः । क्रमेणापच्छेदे तु पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्य प्राबल्यम् । अयमपच्छेदन्यायः पूर्वमीमांसायां षष्ठेऽध्याये पञ्चमपादे पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ५४ यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ५५ अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ५६ इति सूत्रत्रयेण दर्शितः । **मिथ्याभूता इति** । अविद्यादोषस्य मिथ्यात्वादित्यर्थः । इमं पूर्वपक्षं खण्डयति—**तदिदमिति** । यद्यप्यपच्छेदन्यायेनोत्तरप्रवृत्तं शास्त्रं प्रबलं तथापि पूर्वोत्तरशास्त्रयोरेकविषयत्वेन विरोध एव तस्य न्यायस्य प्रवृत्तिः । अत्र तु गुणविधिनिषेधयोर्भिन्नविषयत्वेन विरोध एव न संभवति । तथा च विधीनां प्रतिषेधवाक्यैर्बाधोनुपपन्नः । गुणविधिनिषेधयोर्भिन्नविषयता चेत्थम्—कल्याणगुणविषयकः सर्वकर्मेत्यादिविधिः । हेयगुणविषयको निर्गुणमित्यादिनिषेधः । भगवति कल्याणगुणाः सन्ति । हेयगुणा न सन्तीत्यर्थ इत्युत्तरपक्षाशयः । उत्तरपक्षस्य पशुच्छागनय उत्सर्गापवादनयश्चेति न्यायद्वयमुपोद्बलकम् । पशुच्छागनयश्च पूर्वमीमांसायां षष्ठेऽध्यायेऽष्टमे पादे दशमाधिकरणेन छागस्यैवाग्नीषोमीयपशुताधिकरणमित्याख्येन प्रतिपाद्यते । तत्र पूर्वपक्षसूत्रं—पशुचोदनायामनियमोऽविशेषात् ३० इति । उत्तरपक्षसूत्रम्—छागो वा मन्त्रवर्णात् ३१ इति । अस्याधिकरणस्यार्थः—ज्योतिष्टोमे श्रूयते । अग्नीषोमीयं पशुमालभेत इति । तत्र विहिते पशौ

दमनादरणीयम् । पशुच्छागनयेनोत्सर्गापवादनयेन च विधिनिषेधयोर्भिन्नविषयत्वोपपादनेन तयोर्विरोधगन्धाभावाद्विधीनां प्रतिषेधबाध्यतानुपपत्तेः । तदुक्तं तत्त्वसारे - यद्ब्रह्मणो गुणविकारशरीरभेदकर्मादिगोचरविधिप्रतिषेधवाचः । अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्यः ॥ इति । अथान्तर्यामिणमहंग्रहेणानुसंधत्ते–योऽसावसौ पुरुषः सोऽहमस्मीति । असावसाविति वीप्सादरार्था । यद्वादःशब्दौ विभज्य यत्तच्छब्दाभ्यामन्वेतव्यौ योऽसौ पुरुषः प्रसिद्धः सोऽसावहमस्मीति । यद्यपि पुरुषं प्रकृतिं चैव प्रधानपुरुषेश्वरः ॥ इत्यादिषु पुरुषशब्दो जीववाचितया प्रसिद्धस्तथापि 'तेनेदं पूर्णं पुरुषेण सर्वम् ।' [ श्वे० ३।९ ] इत्यादिश्रुत्या सर्ववेदपठितपुरुषसूक्तादिषु प्रसिद्धो महापुरुष एवेह पुरुषशब्देन विवक्षितः । नन्वेवं योऽसौ पुरुषः सोऽहमिति कथं सामानाधि-

---

विशेषाश्रवणाद्यः कोपि पशुरालब्धव्य इति चेत् । नैवम् । छागस्य वपाया मेदसोनुब्रूहीति मन्त्रे विशेषितत्वात् । तस्माच्छाग एवालब्धव्यः । अयमाशयः । अग्नीषोमीयपशुः सामान्यतो यत्किंचिज्जातीयो न ग्राह्यः किन्तु छागस्य वपाया इति मंत्रे विशेषितत्वाच्छागरूपो ग्राह्यः । एवं प्रकृते निर्गुणमितिपदेन सामान्यतो गुणनिषेधो न कर्तव्यः किन्तु गुणविधिनिषेधबोधकवचोवैयर्थ्यान्यथानुपपत्त्या हेयगुणनिषेधः कर्तव्यः । तदुक्तं—सामान्योक्तिः समानप्रकरणपठिता पर्यवस्येद्विशेषे ॥ **उत्सर्गापवादनयेनेति** । 'प्रकल्प्य चापवादविषयं तत उत्सर्गोभिनिविशते' इति हि परिभाषा । तस्या अर्थः—अपवादविषयं परित्यज्योत्सर्गशास्त्रं प्रवर्तते । यथा मा हिंस्यात्सर्वा भूतानीति हिंसानिषेधकं सामान्यशास्त्रं, अग्नीषोमीयं पशुमालभेतेति यज्ञियमपवादविषयं परित्यज्य प्रवर्तते । ततश्च यज्ञातिरिक्तहिंसाया एव निषेधः । एवं च विधिर्यज्ञियहिंसाविषयकः । निषेधः सामान्यहिंसाविषयकः । तथा च यथात्रोत्सर्गापवादयोर्भिन्नविषयत्वं तत्र न बाध्यबाधकभावः । प्रकृतेपि निर्गुणमित्यादिश्रुतिवाक्यैर्गुणानां सामान्यतो निषेधो न कर्तव्यः किन्तु हेयगुणानामेव । एवं च निषेधो हेयगुणविषयकः । विधिः कल्याणगुणविषयकः । तेन भिन्नविषयकत्वेन न विधिनिषेधयोर्बाध्यबाधकभावः । अत्रार्थे सांप्रदायिकवचः प्रमाणयति–**तदुक्तमिति** । गुणविकारशरीरभेदकर्मादिविषयकाः ये विधिप्रतिषेधास्तद्विषयाणि वचांसि पूर्वोक्तरीत्या परस्परभिन्नविषयत्वात् न विरुद्धानि भवन्त्यतो न विधयः प्रतिषेधैर्बाध्यन्ते । **अहंग्रहेणेति** । अहमिति ग्रहः तैलधारावदविच्छिन्नः प्रत्ययः । वीप्सा–द्विरुक्तिः । महापुरुषः—भगवान् विष्णुः । पुरुषशब्देन यदि भगवद्रूपोर्थो गृह्यते तर्हि जीवेन सह तस्य सामानाधिकरण्यं कथमिति शङ्कते–**नन्विति** । अहंशब्देन न जीवो गृह्यते किन्तु तदन्तर्यामी भगवान्

करण्यम् । अहंपदार्थस्य जीवस्य महापुरुषाद्भिन्नत्वादिति चेन्न । अहंशब्देनाप्यस्मदर्थान्तर्यामिण एवाभिधानेनाहं स इति निर्देशस्य सुसंगतत्वात् । ननु चाहंशब्दस्य प्रत्यगर्थान्तर्यामित्वपरत्वे सोस्मीत्युत्तमपुरुषो न घटते । नहि तदन्तर्यामिपुरुषोस्मीत्यन्वयो युज्यत इति चेदुच्यते— मदन्तर्यामीत्यादिशब्दान्तरेणोपस्थापिते प्रत्यगर्थान्तर्यामिण्युत्तमपुरुषान्वयासंभवेप्यहमित्यस्मत्पदोपस्थापिते तस्मिन्नुत्तमपुरुषान्वयो युज्यत एव । तथा च सूत्रम्—अस्मद्युत्तमः । ( पा० सू० १।४।१०७ ) इति । प्रत्यगर्थबोधकास्मच्छब्दोपपद उत्तमपुरुषो भवतीत्यर्थः । न पुनरस्मच्छब्दस्य प्रत्यगर्थद्वारा परमात्मपर्यन्ततायामुत्तमनिवृत्तिरिति । आधिकं तु प्रविष्टं न तद्धानिरिति न्यायात् । एवं तत्त्वमसीत्यादिष्वप्यसीति मध्यमपुरुषो निर्वाह्यः । त्वंपदेनाभिमुखचेतनद्वारैव तदन्तर्यामिणोभिधानाभ्युपगमात् । तत्रापि युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।' ( पा० सू० १ । ४ । १०५ )

---

तेन चाभयोर्भगवद्वाचकत्वात्सामानाधिकरण्यं घटत इति भावः । **इति चेदिति** । शङ्काकृतोयमाशयः । अहंपदेन जीवान्तर्यामिभगवद्रूपोर्थो यदि गृह्यते तर्हि अस्मच्छब्दस्य प्रथमपुरुषवाचकत्वादहमन्तर्यामिपुरुषोस्तीति प्रयोगः स्यान्न त्वहमस्मीत्युत्तमपुरुषप्रयोगः । अत्र तु तथा प्रयोगादहंपदेन प्रत्यगर्थो गृहीतुमशक्यः । **उच्यत इति** । अयमभिप्रायः । मदन्तर्यामी भगवान् इत्यादिशब्देषु यत्रान्तर्याम्यादिपदानि विशेष्यरूपाणि तत्र प्रथमपुरुषोवश्यंभावी उत्तमपुरुषान्वयश्च न घटते । यत्र त्वस्मच्छब्देनान्तर्याम्यादिपदार्थबोधस्तत्रास्मच्छब्दसामीप्यात्–अस्मद्युत्तमः ( पा. सू. १ । ४ । १०७ ) इति सूत्रेणोत्तमपुरुषो युज्यत एव । प्रत्यगर्थो जीवः । ' अस्मद्युत्तमः ' इति सूत्रस्यायमर्थः-अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेप्रयुज्यमानेप्युत्तमपुरुषो भवति । अस्मच्छब्द उपपदे उत्तमपुरुषो भवतीत्येवानेन सूत्रेण बोध्यते । अस्मच्छब्देनायमेवार्थो बोध्यते चेदुत्तमपुरुषः अन्यथा नेति तु नानेन सूत्रेण बोध्यते तथा चास्मच्छब्देनान्तर्यामिभगवद्रूपार्थबोधेपि अस्मच्छब्दोपपदत्वान्नोत्तमपुरुषासंगतिः । अधिकार्थप्रवेशेपि नास्मच्छब्दत्वस्य हानिरित्यत्र न्यायमुपोद्बलयति–**अधिकं त्विति** । कस्मिंश्चित्पदेधिकार्थस्याधिगमेपि न पूर्वार्थस्य हानिरिति न्यायस्यार्थः । **निर्वाह्य इति** । त्वंपदेन जीवो बोध्यते ततश्च ब्रह्मणा सामानाधिकरण्यं न स्यादतस्त्वंपदेन जीवान्तर्यामिभगवद्रूपोर्थो ग्राह्यः । तेन यद्यपि सामानाधिकरण्यं तथापि प्रथमपुरुषः स्यादिति शंकायां पूर्ववत् युष्मच्छब्दोपपदसंबन्धात् तत्त्वमसीति मध्यमपुरुषस्योपपात्तिः कर्तव्या । युष्मद्युपपद इति सूत्रस्यायमर्थः–युष्मद्युपपदे सति व्यवहिते चाव्यवहितेपि सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयु-

इत्येतावदेव हि स्मर्यते । न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिरिति । ये तु तत्त्वमसि सोऽहमस्मीत्यादिष्वहंत्वमादिशब्दैर्युष्मदस्मदर्थपरित्यागेन निर्विशेषचिन्मात्रस्वरूपैक्यमेव वाक्यवेद्यमित्याहुः । तानेव तत्त्वमसीत्यादिवाक्येष्वसिरिव सोहमस्मीति वाक्यस्थास्मिरपि खण्डयति । श्रोतर्यनुसंधातरि च युष्मदस्मत्ते हि तैः परित्यक्ते न तेषामसिना कश्चित्प्रतिबोधनीयोस्ति न च कश्चिदस्मिना विशिष्यानुसंधेयः । ननु प्रकृते युष्मदस्मदोरविवक्षायामपि तयोर्व्युत्पन्नयुष्मदस्मच्छब्दोपपदमात्रोपजीवनेनास्मत्पक्षेपि त्वमहमिति मध्यमोत्तमयोः संपत्तिरिति चेत् । ततोप्यपरित्यक्तप्रवृत्तिनिमित्तकस्यास्माकं निर्वहणस्यै-

---

ज्यमानेप्यप्रयुज्यमानेपि मध्यमपुरुषो भवति । **मध्यमनिवृत्तिरितीति** । अधिकं तु प्रविष्टं न तद्धानिरिति न्यायादन्तर्यामिपर्यन्तस्यार्थस्याधिक्येपि न मध्यमपुरुषे बाधकमित्यर्थः । अद्वैतवादिमतमनूद्य दूषयति – **ये त्वित्यादिना** । अद्वैतमतानुयायिनो हि तत्त्वमसीत्यत्र त्वंपदेन सोहमस्मीत्यत्राहंपदेन च युष्मदस्मदर्थौ यो जीवरूपस्तस्य त्यागं कृत्वा जहदजहल्लक्षणया चैतन्यपरत्वमादाय पूर्वोक्तवाक्ययोर्निर्विशेषं चैतन्यस्वरूपैक्य एव तात्पर्यमिति वदन्ति । तेषां मते युष्मदस्मदर्थस्य संपूर्णतया त्यागादन्यार्थस्यैक्यरूपस्य ग्रहणात् उभयोरपि वाक्ययोः प्रथमपुरुषो दुर्वार इत्याह— **तानेवेत्यादिना खण्डयतीत्यन्तेन** । असिरिव खड्ग इव । **अस्मिरपीति** । अस्मदर्थपरित्यागादुत्तमपुरुषो न घटत इत्यर्थः । **श्रोतर्यनुसंधातरीति** । अयं भावः । तत्त्वमसीति वाक्ये श्वेतुकेतसंज्ञकः श्रोता युष्मत्पदेन यदा गृह्यते तदा स बोध्येतासिपदेन त्वं ब्रह्मरूपोसीति । तथैव अहंब्रह्मास्मीत्यत्र ब्रह्मणोनुसंधाता यदास्मच्छब्देन गृह्येत तदा सोस्मिपदेन ब्रह्मानुसंधानकर्तृभूतो बोध्येत । अत्राद्वैतिमते युष्मदस्मदोरर्थस्य जीवस्य त्यागाद्युष्मदस्मत्ते परित्यक्ते तेन न कश्चिद्बोधनीयः श्वेतकेतुप्रभृतिरसिपदेन । न वा केनापि ब्रह्मानुसंधानं कर्तव्यं यदर्थमास्मिपदप्रयोगः । श्रोतर्यनुसंधातरीति विषयसप्तमी । तथा च श्रोतृविषयको युष्मच्छब्दः । अनुसंधातृविषयकोऽस्मच्छब्द इत्यर्थः । इयमनुपपत्तिरद्वैतिमतेपि परिहर्तुं शक्येत्याह–**नन्विति** । पूर्वं युष्मद्युपपद इत्यादेः, अस्मद्युत्तम इति सूत्रस्य चार्थो दर्शितस्तत्र युष्मदस्मदोरयमेवार्थोऽपेक्ष्यत इति तु नास्ति केवलं युष्मदस्मदुपपदत्वमपेक्ष्यते मध्यमोत्तमपुरुषविधौ । तथा चाद्वैतिमते चैतन्यमात्ररूपार्थेऽपि युष्मदस्मदोरुपपदत्वानपायान्न काप्यनुपपत्तिरित्यर्थः । **व्युत्पन्नयुष्मदस्मदिति** । प्रकृतिप्रत्ययसाधिते युष्मदस्मदी । अद्वैतवादिदर्शितामुपपत्तिमङ्गीकृत्यास्मत्पक्षे लाघवमिति दर्शयति—**ततोपीति** । प्रवृत्तिनिमित्तं नाम अर्थः । कम्बुग्रीवादिमत्त्वनिमित्तेन घट इति पदं तस्मिन्नर्थे प्रवर्तते । एवं च कम्बुग्रीवादिमत्त्वं प्रवृत्तिनिमित्तं घटपदस्य । तथा प्रकृते

वानुसर्तुमुचितत्वात्। अपर आह योसावसौ पुरुषः सोहमस्मीत्यत्र पुरुषशब्देन परमपुरुषो न विवक्षणीयः। तथा सत्युत्तमपुरुष इत्याख्यायाः सोऽहमिति सामानाधिकरण्यस्य च क्लेशेन निर्वाह्यत्वात्। अतो वरमत्र पुरुषशब्दस्य परिशुद्धजीवात्मपरत्वमाश्रयितुम्। एवं च सति यः पुरुषो मुक्तिदृश्यभव्याकारः परिशुद्धजीवात्मा सोहमस्मीत्यन्वयादुत्तमपुरुष इत्याख्यायाः सामानाधिकरण्यस्य चातिस्वरसेन निर्वाह इति। नायं पक्षः साधुः। तथा हि-भवत्वेवमिह निर्वहणं तथापि तत्त्वमसीत्यत्र तत्पदस्य त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसीत्यादिषु त्वंपदस्य च परदेवतावाचकत्वे त्वदुक्तनिर्वाहस्यासंभवात्। अकामेनापि तत्रास्मदुक्तनिर्वाहस्य समाश्रयणे तत्समानन्यायादत्रापि तस्यैवानुसर्तुमुचितत्वादिति। स्यादेतदेवं त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसीत्यत्र कथं पुरुषव्यवस्था त्वमहंशब्दयोरुभयोरपि श्रवणात्। उद्देश्यविषयकमेव युष्मदादिपदमुपपदत्वेन पाणिनिसूत्राभिप्रेतम्। यथा चोद्देश्यसमर्पकोपपदवशादेवात्र मध्यमोत्तमयोर्व्यवस्था सिध्यतीति चेत्। अस्त्वेवमिह समाधानं तथापि तत्त्वमसी-

---

युष्मदस्मच्छब्दयोः प्रवृत्तिनिमित्तं प्रत्यगर्थो जीवः। तस्य चाद्वैतिमते त्यागः कर्तव्यः। अस्मत्पक्षे तु न त्यागः किन्तु अन्तर्यामिपर्यन्तमाधिकार्थग्रहणम्। ततश्चार्थत्यागपूर्वकं केवलं युष्मदस्मदुपपदत्वेन निर्वाहः कर्तव्योऽद्वैतिमते। अस्मन्मते त्वर्थत्यागं विनैव निर्वाहस्ततश्च लाघवघटितत्वादस्मत्पक्षानुसरणमेव न्याय्यं नार्थत्यागरूपगौरवघटितस्तत्पक्ष इत्यर्थः। रामानुजमतानुयायिनः कस्यचिदेकदेशिनो मतमनूद्य खण्डयति-**अपर आहेति**। पुरुषपदस्य परमपुरुष इत्यर्थकरणे लक्षणाश्रयितव्येति लक्षणाश्रयणस्य दोषत्वात्। **इत्याख्याया इति**। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति भगवद्गीतोक्तेः। **क्लेशेनेति**। पूर्वोक्तलक्षणाश्रयणं सोहमित्यत्रान्तर्यामिपर्यन्तार्थस्य स्वीकारश्चेति क्लेशः। **असंभवादिति**। तत्त्वमसीत्यत्र परिशुद्धजीवात्मग्रहणस्यानुपपत्तेरित्यर्थः। **अकामेनापीति**। तत्रास्मदुक्तनिर्वाहस्य गले पतितत्वादिति भावः। **स्यादेतदिति**। अयं पूर्वपक्ष इत्यर्थः। त्वं वा अहमस्मि अहं वै त्वमसीत्यत्र युष्मदस्मदोरुभयोरुपपदत्वेन मध्यमोत्तमयोर्विकल्पः प्राप्नोति न नियमेनोत्तमपुरुषो मध्यमपुरुष एवेति। न चोद्देश्यानुसारं व्यवस्था स्यात्तथा चोद्देश्यसमर्पकोपपदवशाद्व्यवस्था स्यादिति वाच्यम्। त्वं वा अहमस्मि, अहं वै त्वमसीति वाक्ययोरुद्देश्यसमर्पकत्वेन व्यवस्थासिद्धावपि तत्त्वमसीत्यत्र विकल्पस्य दुर्निवारत्वात्। तत्त्वमसीति वाक्ये त्वंपदयोगवत्तत्पदयोगो वर्तते तेन तत्त्वमसीत्यपि वाक्यं प्रसज्ज्येत। न चात्राप्युद्देश्यसमर्पकोपपदवत्त्वेन व्यवस्थेति

त्यत्र पुरुषव्यवस्था न घटते तत्र त्वंपदयोगवत्तत्पदयोगस्यापि सत्त्वात् । तथा चासीतिवदस्तीति प्रथमपुरुषस्यापि प्रसङ्गः । नह्यत्रापि त्वंपदमुद्देश्य समर्पकम् । येन त्वंपदमेव पुरुषनिमित्तं न तु तत्पदमपीति व्यवस्था स्यात् । तथा च तत्त्वमसीतिनिरूपणावसरे भाष्यम् –नात्र किंचिदुद्दिश्य किमपि विधीयत इति । तस्मात्तत्त्वमस्तीति प्रसङ्गो दुर्वार इति । अत्रोच्यते—तत्त्वमसीत्यत्रापि त्वंपदार्थ उद्देश्य एव । ततश्चोद्देश्यविषयकयुष्मत्पदवशात्तत्र मध्यम एवेति न प्रथमपुरुषप्रसङ्गः । नच भाष्यविरोधः। भाष्यस्य विधेयांशमात्रनिषेधपरतयोद्देश्यांशनिषेधकत्वाभावात् । तथा हि न ह्येवं भाष्याभिप्रायः । नात्र किंचिदुद्दिश्यते । न च किंचिद्विधीयत इति । अपि त्वेवमभिप्रायः। त्वंपदेन किंचिदुद्दिश्यत एव किंतूद्दिष्टे तत्र न किंचिदपि विधीयत इति। कथमवगम्यत इति चेत्प्राप्तस्यैवोपसंहारत्वोपपादकभाष्येणैव विधेयांश एव निषिध्यत इत्यभिप्रायस्य व्यक्तत्वात् । अन्य आह त्वं राजास्यहं राजास्मीत्यादिवत्तादधीन्यादुपचारविवक्षया तत्त्वमसि सोऽहमस्मीत्यादिषु मध्यमोत्तमसामानाधिकरण्यानां सामञ्जस्यमिति । तदप्युपेक्षणीयमेव । लोकवेदयोश्चेतनपर्यन्तं देवमनुष्यादिव्यवहारबलेन जातिगुणशब्दवन्मुख्यस्यैव संभव उपचारकल्पनस्यान्याय्यत्वात् ॥ १६ ॥

---

वाच्यम् । भाष्योक्त्या त्वंपदस्योद्देश्यसमर्पकत्वाभावात् । इति पूर्वपक्षाशयः । समाधत्ते–**अत्रोच्यत इति** । **भाष्यस्येति** । भाष्ये हि न विधीयते किंचिदित्यंशः प्रतिपाद्यः । न तु न किंचिदुद्दिश्यत इत्युद्देश्यनिषेधांशः प्रतिपाद्यः । वाक्यभेदप्रसंगात् । तेन नात्रोद्देश्यांशो निषिध्यते ततश्चोद्देश्यसमर्पकयुष्मदुपपदघटितत्वात्तत्त्वमसीति प्रयोगः साधुः । भाष्याभिप्रायं प्रतिपादयति–**तथाहीति** । **प्राप्तस्यैवेति** । ऐतदात्म्यमिदं सर्वमित्यनेनैव प्राप्तस्येत्यर्थः । **उपसंहारत्वोपपादकभाष्येणैवेति** । इदं हि श्रीभाष्ये प्रथमाध्यायप्रथमपादप्रथमसूत्रे स्पष्टम् । तथाहि–तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चेत् नात्र किंचिदुद्दिश्य किमपि विधीयते । ऐतदात्म्यमिदं सर्वमित्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत् । इदं सर्वमिति सजीवं जगन्निर्दिश्यैतदात्म्यमिति तस्यैष आत्मेति तत्र प्रतिपादितम् । एकदेश्यन्तरमतमाह–**अन्य आहेति** । त्वं राजासीत्यस्य यथा त्वं राजाधीनोसीति तादधीन्यं तत्स्वाधीनत्वं लक्षणया बोध्यते तेन राजपदस्य लाक्षणिकत्वाद्यथा तत्र सामानाधिकरण्यं तथा प्रकृतेपीत्यर्थः । उपचारविवक्षया–लक्षणाश्रयणेन । **उपेक्षणीयमेवेति** । शक्यार्थाबाधे लक्षणाश्रयणस्यान्याय्यत्वात् । तद्विवृणोति–**लोकवेदयोरिति**। लोके वेदे च सर्वेषां चेतनानां देवमनुष्यादीनां व्यवहारोऽसत्यामनुपपत्तौ मुख्य एव भवति

**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ।**
**ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥**

एवं परावरतत्त्वविवेकं परमनिःश्रेयससाधनभूतसांगभक्तियोगं तन्निष्ठस्यानुसंधेयमन्त्रद्वयं चोपदिश्येदानीं भक्तियोगे ज्ञानशक्त्यादिशून्यतया शरणागतिमवलम्बमानानां तदनुष्ठानमन्त्रावुपदिशति । यद्यप्यागमे आचार्यैरिमौ शरणागतिमन्त्राविति रहस्यत्वात्कण्ठरवेण नाभिहितौ तथापि प्राज्ञानामर्थसामर्थ्याद्यथा तत्परत्वावगमः सुशकस्तथा तयोः श्लोकयोरर्थवर्णनं कृतम् । अभाषि चेत्थमन्ते—व्यक्ताव्यक्ते वाजिनां संहितान्ते व्याख्यामित्थं वाजिवक्त्रप्रसादात् । वैश्वामित्रो विश्वमित्रं व्यतानीद्विद्वच्छात्रप्रीतये व्यंकटेशः ॥ इति ॥ अत्र विद्वच्छात्रप्रीतय इत्यनेन स्वप्रबन्धस्य निगूढाभिप्रायत्वं व्यञ्जितम् । एवमाचार्याभिप्रायविषयत्वाच्छरणागतिपरतया मन्त्रद्वयं व्याख्यास्यते । तत्र वायुरनिलमिति प्रथमश्लोकः पूर्वखण्डसमानार्थकः अग्ने नयेत्यादि चापरश्लोक उत्तरखण्डसमानार्थकः । तथा च—प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च ॥ १ ॥ इत्येवमाद्याः पूर्वोत्तरखण्डयोर्विशोधिता

---

न गौण इत्यर्थः । ब्राह्मण इति जातिशब्दः । शोण इति गुणशब्दः ॥ १६ ॥

**एवमिति** । ईशावास्यमित्यादिना प्रथममन्त्रेण परावरतत्त्वत्रयविवेक उक्तः । ततः परं कुर्वन्नेवेत्यादि द्वितीयमारभ्य संभूतिमिति चतुर्दशमन्त्रपर्यन्तं निःश्रेयससाधनीभूतभक्तियोगः प्रोक्तस्तस्मिन्भक्तियोगे निष्ठा यस्य तादृशस्योपासकस्य हिरण्मयेन पात्रेणेति पञ्चदशः 'पूषन्नेकर्षे' इति षोडशश्च मन्त्रोनुसंधेयत्वेनोच्यते । एतदाह—**अनुसंधेयमन्त्रद्वयमिति** । पूर्वं वेदान्ताचार्यव्यंकटेशार्यैरियमीशावास्योपनिषद्व्याख्याता तत्र कुतो नेमौ मन्त्रावनुष्ठेयत्वेनाभिहिताविताह—**यद्यपीति** । **रहस्यत्वादिति** । रहस्यं गुरुसंप्रदायत एव ज्ञेयं न तु तद्ग्रन्थे स्फुटं वक्तव्यमित्याशयः । **प्राज्ञानामिति** । प्राज्ञा हि ग्रन्थतात्पर्यज्ञतया यथा तदर्थं जानीयुस्तथान्ते वेंकटार्यैर्वर्णनं कृतमित्याह—**अभाषीति** । विश्वमित्रं जगद्धितकारी वैश्वामित्रो व्यक्ताव्यक्ते व्यक्तं च तदव्यक्तं च किंचित्स्फुटं यदतिरहस्यं तदव्यक्तमस्फुटं चोक्तवान् । यदतिरहस्यत्वादस्फुटं तद्विद्वच्छात्राः स्वयमेव जानीयुः किंचास्फुटं गुरुवाक्यमस्माभिर्ज्ञातमिति प्रीता अपि ते भवेयुरिति बोधनायाह—**विद्वच्छात्रप्रीतय इति** । **व्यञ्जितमिति** । विद्वांस एव निगूढाभिप्रायं मत्प्रबन्धं जानीयुरिति वेंकटार्याशयः । **पूर्वखण्डसमानार्थक इति** । प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । इति पूर्वार्धेन समानार्थको वायुरनिलमिति मन्त्रः । प्राप्त्युपायं

ये पदार्था ये च वाक्यार्थभेदास्ते सर्वेपीह पूर्वोत्तरयोः श्लोकयोरनुसंधेयाः। सर्वोपायविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत्। एतज्ज्ञानं च योगश्च शेषोन्यो ग्रन्थविस्तर इत्यादिशास्त्रैः प्रोक्षणादिभिः समिदादिकमिव परिशुद्धस्वरूपयाथात्म्यज्ञानेन संस्कृत्यात्महविः समर्पणीयमित्युक्तत्वादिहापि शरीरेन्द्रियादिभ्योतिरिक्तं स्वात्मानं प्रथमं विशोध्य तं ब्रह्मणि समर्प्य स्वाधिकारानुगुणमर्थयते––'भोक्ता भोग्यं प्रेरितारं च मत्वा' [ श्वे० १।१२ ] इत्यादिश्रुत्यन्तरप्रसिद्धचिदचिदीश्वरतत्त्वत्रयमिहापि द्रष्टव्यम्। वायुः विद्याकर्मानुगुणभगवत्संकल्पवशेन तत्र तत्र गन्तृत्वाद्वा वायुः। अनेन जीवस्याणुपरिमाणत्वं परमात्माधीनत्वं च सिध्यति। वा गतिगन्धनयोरिति धातुः। निलयरहितत्वात् क्वचिदपि व्यवस्थितत्वाभावाच्चानिलः। अमृतम्। म्रियमाणेपि देहसंताने स्वयममृतं स्वरूपतो धर्मतश्चाविनाशीत्यर्थः। 'अविनाशी वा अरेयमात्मानुच्छित्तिधर्मा' [ बृ० ४।५।१४ ] 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' [ बृ० ४।३।३० ] न विद्यत उच्छित्तिर्विनाशो यस्य सोनुच्छित्तिर्नित्य इत्यर्थः। अनुच्छित्तिर्धर्मो यस्यासावनुच्छित्तिधर्मेति पुनर्बहुव्रीहिः। नित्यज्ञानवानिति भावः। आहुश्च यामुनमुनयः––तदेवं चित्स्वभावस्य पुंसः स्वाभाविकी चितिः। नानापदार्थसंसर्गात्तत्तच्चित्तत्त्वमश्नुते ॥ इति। तदमृतत्वम् 'अपहतपाप्मा विरजो विमृत्युः।' [ छा० ८।१।५] इति

---

फलं प्राप्तेस्तथा प्राप्तिविरोधि च ॥ इत्युत्तरार्धेन समानार्थकः अग्ने नयेत्यादिमन्त्रः। प्राप्त्युपायः-भूयिष्ठां ते नमउक्तिं विधेमेति। फलं–अग्ने सुपथा नयेति। प्राप्तिविरोधि–युयोध्यस्मज्जुहुराणमेन इति। **ग्रन्थविस्तर इति।** अतोन्यत्तत्र तात्पर्यं नास्तीत्यर्थः। **इत्यादिशास्त्रैरिति** आत्मस्वरूपयाथार्थ्यज्ञानेनात्महविषः संस्कारं कृत्वा तत्समर्पणीयं ब्रह्मणि। हविःसंस्कारे दृष्टान्तः प्रोक्षणादिभिरिति। होमद्रव्याणां समिद्घृतादीनां प्रोक्षणावेक्षणानुमन्त्रणानि यथा संस्कारास्तथात्महविषः परिशुद्धस्वरूपयाथात्म्यज्ञानं संस्कार इत्यर्थः। **अतिरिक्तमिति।** 'भस्मान्तं शरीरम्' इत्युक्तेः। शरीरमिन्द्रियादीनामुपलक्षणम्। **वायुरिति।** जीवो हि स्वविद्याकर्मानुसारिभगवत्प्रेरणावशात्तत्र तत्र वस्तुषु गमनशीलोतो वायुरुच्यते। सर्वत्रगत्वाद्वायुरणुपरिमाणः। **अनिल इति।** निलयं गृहं तद्रहितत्वेन कुत्रापि स्थितेरभावाज्जीवोनिल इत्यभिधीयते। **अमृतमिति।** जीवधृतदेहानां प्रारब्धनाशात् विनाशेपि जीवो न

श्रुतेः । अनिलममृतमिति पुंलिङ्गत्वेन विवरणीयं वायुरिति पुंलिङ्गत्वेनोपक्रमात् । अत्र विशिष्टवृत्त्या योगतो वा परमात्मविषयत्वं न शङ्कनीयम्] नश्वरदेहस्यानन्तरवचनेन तद्व्यावृत्त्या प्रत्यगात्मपरत्वस्यैव न्याय्यत्वात् । क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः [ श्वे० १ । १० ] इति श्रुतावमृतशब्दस्य जीवे प्रयोगात् । स्वभोग्यतया प्रधानं हरतीति हरो जीव इत्यर्थः । एवं प्रत्यगात्मनोऽमृतत्वमभिधाय तच्छरीरस्य मृतत्वमवश्यमित्याह--अथेदं भस्मान्तं शरीरमिति । प्रकृतादर्थादर्थान्तरविवक्षायामथशब्दः । इदं शरीरमिति विशेष्यमीश्वरशरीरव्यवच्छेदार्थम् । कर्मवश्यशरीरं भस्मान्तमित्यर्थः । ब्रह्मादिषु प्रलीनेषु नष्टे स्थावरजंगमे । एकस्तिष्ठति सर्वात्मा स तु नारायणोऽव्ययः ॥ इत्युक्तेः । भस्मशब्दो दाहाख्यसंस्कारपरः सन्खननादेरप्युपलक्षकः । अत्रात्मशरीरयोरमृतत्वमृतत्वोक्त्या भेदः समर्थ्यते । रसायनादिसेवया शरीरस्य नित्यत्वसंदेहोपाक्रियते । स्वदेहवैराग्यं कार्यमिति च सूच्यते । शीघ्रं मोक्षोपाये प्रवर्तितव्यमित्यादिकं द्योत्यते । एवं चिदचिद्विवेकमुक्त्वा प्रेरितारं महापुरुषं प्रणवेनोपास्ते-ॐमिति । उक्तं च योगानुशासने । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । ( यो० सू० १ । २४ ) तस्य वाचकः प्रणवः । ( यो०

---

नश्यति । **विवरणीयमिति** । वायुरितिमंत्रारंभस्थपुंलिंगघटितपदानुसारादनिलामृतपदे पुंलिंगघटितत्वेन विपरिणमय्य व्याख्येये । **अत्रेति** । वायुरित्यादिशब्दानां परमात्मार्थो न ग्राह्यः किन्तु जीवरूप एव अथेदं भस्मान्तं शरीरमिति तदनन्तरं शरीरस्य ग्रहणात् । जीवादनन्तरं नश्वरशरीरोक्तिर्घटत एव । प्रत्यगात्मा—जीवः । **अथशब्द इति** । अथ शब्दो हि प्रस्तुतार्थाद्भिन्नस्यार्थस्य बोधने प्रयुज्यते । **इदमिति** । इदमस्तु संनिकृष्टे इत्यादिवचनादिदंशब्देन समीपवर्ति कर्मवश्यशरीरं बोध्यते । **खननादेरिति** । ऊनद्विवर्षं निखनेदिति याज्ञवल्क्यस्मृत्या द्विवर्षोनवयस्कस्य प्रेतस्य खननं विहितम् । आदिपदात् प्रेतशरीरविभागानां चतुर्दिक्षु प्रक्षेपो जलप्रक्षेपादिकं ग्राह्यम् । स्मर्यते हि परमहंसस्य शवं चतुर्धा विभज्य चतसृषु दिक्षु क्षेप्तव्यमिति यातिदेहस्य च जले प्रक्षेपः । आयुर्वेदे रसायनयुक्तं तेन शरीरं न विनंक्ष्यतीति कस्यचिन्मतिस्तामपाकरोति—**रसायनादिसेवयेति** । **योगानुशासन इति** । पातञ्जले योगशास्त्र इत्यर्थः । क्लेशकर्मेत्यादिसूत्रस्यार्थः—अविद्यादयः क्लेशाः । कुशलाकुशलानि कर्माणि । तत्फलं विपाकाः । तदनुगुणा वासना आशयाः । ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति । यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः । तस्य वाचक इति सूत्रस्यार्थः—ईश्वरस्य वाचकः प्रणवः

सू० १ । २९ ) आह च सर्वज्ञो महादेवः--ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम् । इति द्रष्टव्यम् । यद्वा शरीरमात्मानं च विविच्य विविक्तमात्मानमोंकारवाच्ये परमपुरुषे समर्पयत्योमिति । प्रणवस्यात्मसमर्पणपरत्वम् 'ओमित्यात्मानं युञ्जीत'। 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् । [ मुं० २ । २ । ४ ] इत्यादिषु प्रसिद्धम् । अथ क्रतुरूपिणं विष्णुं ज्ञानयज्ञगोचरमभिमुखीकुर्वंस्तदनुग्रहं प्रार्थयते — क्रतो स्मर क्रतो ज्योतिष्टोमादिक्रत्वात्मक । 'अहं क्रतुरहं यज्ञ इति वचनात् । यज्ञः पञ्चमहायज्ञात्मक इत्यर्थः । स्मर स्मरणानुग्रहया बुद्धया विषयीकुरु । अहं स्मरामि मद्भक्तं नयामि परमां गतिम् । इति भगवद्वचनम् । अत्र स्मरामि नयामीति पदद्वयस्य क्रतो स्मराग्ने नयेति प्रार्थनाद्वयापेक्षया प्रतिवचनत्वावगमात् । कृतं स्मर यत्कृतं यत्किंचिदानुकूल्यमनुसंधाय कृतज्ञस्त्वं मां रक्षेति वा । एतावदन्तं त्वत्कृत्यतयानुकूल्यं प्रतिसंधाय त्वमेव शेषपूरणं कुर्विति भावः । उक्तार्थ आदरातिशयात्क्रतो स्मर कृतं स्मरेत्यावृत्तिः ॥ १७ ॥

**अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १८ ॥**

बृहदारण्यके पञ्चमेध्याये यदा वै पुरुषोस्माल्लोकात्प्रैति स वायुमागच्छति [ बृ. ५।१०।१ ] इत्यादिनार्चिरादिकं पन्थानमुपदिश्य पश्चादध्यायावसाने हिरण्मयेन पात्रेणेत्याद्याश्चत्वारो मन्त्राः क्रमेण पठिताः । अग्नेग्निशरीरक-यस्याग्निः शरीरम् इति श्रुतेः । यद्वा—साक्षादप्यविरोधं जैमिनिः [ ब्र० सू० १ । २ । २८ ] अग्रं नयतीत्यग्निः । अग्रनयनादिगुणयुक्त नय प्रवर्तयेत्यर्थः । सुपथा शोभनेन मार्गेणार्चिरादिना । आर्चिरहःसितपक्षानुदगयनाब्दौ च मारुतार्केन्दून् । अपि वैद्युतवरुणेन्द्र-

ईश्वरः प्रणवस्य वाच्यः । **प्रतिवचनत्वावगमादिति** । श्रुतौ क्रतो स्मरेत्युक्तं यत्तस्य स्मृतावहं स्मरामीत्युत्तरम् । अग्ने नयेत्यस्य च नयामि परमां गतिमित्युत्तरमित्यर्थः । **शेषपूरणमिति** । अवशिष्टकर्तव्यभागस्य पूरणमिति भावः ॥ १७ ॥

**साक्षादपीति** । अस्य सूत्रस्यार्थः--जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षादव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते ॥

प्रजापतीनातिवाहिकानाहुः । इत्यभियुक्तसंगृहीतेन मार्गेणेति भावः । राये धनाय ब्रह्मणः प्राप्यत्वाद् ब्रह्मैव सुस्थिरमनन्तधनं तस्मै हिरण्मयपुरुषाय त्वत्प्रापय इति भावः । अस्माननन्यप्रयोजनान् अनन्यगतींश्चेत्यर्थः । न केवलं मामपि त्वनुबन्धिजनानपीति बहुवचनस्याभिप्रायः । देव मम बुद्धौ द्योतमान । 'तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये । ( श्वे० ६ । १८ ) इति श्रुतेः । विश्वानि वयुनानि । चतुर्विधपुरुषार्थोपायान्यथावद्विद्वांस्त्वमस्मान्नेतुमर्हसीति भावः । 'यो वै वेदांश्च प्रहिणोति तस्मै ( श्वे० ६ । १८ ) इति श्रुतेरिति भावः । मुमुक्षुर्वै शरणमहं प्रपद्य इति मन्त्रगतं मुमुक्षपदं विवृण्वन्नाह—युयोध्यस्मज्जुहुराणमेन इति । हुर्छा कौटिल्ये । जुहुराणं कुटिलं बन्धात्मकमित्यर्थः । एनः अकृत्यकरणकृत्याकरणादिरूपं त्वदुपासनोत्पत्तिप्रतिबन्धमित्यर्थः । त्वत्प्राप्तिप्रतिबन्धकमिति वा । एन इति जात्यभिप्रायकम् । अस्मदस्मत्तः । युयोधि पृथक्कुरु । एतावदेव याचे त्वां जुहुराणमेनोस्मत्तः प्रथमं वियोजयेति तत्पश्चाद्यथामनोरथं विनाशय पुरुषान्तरे संक्रामय वा न तत्रास्माकं निर्बन्ध इति भावः । भूयिष्ठाम् । अनन्यगतित्वेनावृत्तितो भूयसीम् । नमउक्तिम् । ते आप्तकामतया निरुपाधिकस्वामितया च नमउक्तिम् । निरपेक्षाय ते विधेम विदध्महे । हे अग्ने देव विश्वानि वयुनानि विद्वांस्त्वं जुहुराणमेनोस्मत्तो युयोधि सुपथास्मान्राये नय वयं ते भूयिष्ठां नम-

---

**आतिवाहिकानाहुरिति** । अर्चिरादयो हि देवताविशेषा आतिवाहिकास्ते परमपुरुषेण विदुषामतिवाहे नियुक्ताः । अतिवहनं हि गन्तृणां गमयितृत्वम् । तच्च तत्पुरुषोमानवः स एनान् ब्रह्म गमयति ( छां. ४।१५।५–५।१०।२ ) इति श्रुतम् । अर्चिरहःशुक्लपक्षोत्तरायणसंवत्सरमारुतार्केन्दुशब्दा अर्चिराद्यात्मभूतानां देवताविशेषाणां वाचकाः । **अनुबन्धिजनानिति** । अनुयायिलोकानित्यर्थः । **अकृत्येति** । अविहितस्य करणं विहितस्याकरणं चेत्यर्थः । **जात्यभिप्रायकमिति** । प्रतिबन्धकसामान्यमित्यर्थः । **इति भाव इति** । पापान्यस्मत्तो वियोजय तत्प्रतिपत्तिकर्म तु भवदिच्छया किमपि भवतु न तद्विषयविशेषेस्माकमाग्रह इत्यर्थः । अध्यायार्थमुपसंहरति-**एवमिति** । भगवद्गीतायाः प्रतिपाद्यविषयकोन्तिमः श्लोकः— सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥ अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ( भ. गी. १८।६६ ) इति । अतः परं–य इमं परमं गुह्यम् । ( भ. गी. १८।६७ ) इत्यादयः फलश्रुत्यादिप्रति-

अर्कि विधेमेत्यन्वयः । नित्याञ्जलिपुटा हृष्टा नम इत्येवंवादिनो भवाम इति भावः ॥ १८ ॥

एवमस्मिन्नध्याय आदितो मन्त्राष्टकस्य तु परतत्त्वं ततो मन्त्राष्टकस्य परमपुरुषविषयकं भक्तियोगरूपं साक्षात्साधनमवशिष्टमन्त्रद्विकस्य सर्वफलसाधनप्रपदनं प्रधानप्रतिपाद्यम् । एवं च भगवद्गीताध्यायषट्कं प्रथमं प्रथमाष्टकस्योपबृंहणं द्वितीयषट्कमुपरितनाष्टकस्य चरमश्लोकस्य पूर्वार्धं वायुरनिलममृतमन्त्रोक्तानुष्ठानविधायकमुत्तरार्धं तु युयोध्यस्मज्जुहुराणमेन इति प्रार्थयमानानां प्रार्थनापूरणसंकल्पपूर्वकं शोकप्रतिक्षेपकं चरमश्लोकोप्यस्य मन्त्रद्विकस्योपबृंहणमिति बोध्यम् ।

इति रामानुजमतानुयायिकूरनारायणकृतप्रकाशिका-
समेतेशावास्योपनिषत् ।

---

पादकाः श्लोकाः । अस्मिन् सर्वधर्मानित्यादिश्लोकस्य पूर्वार्धेन वायुरनिलमिति सप्तदशस्य मन्त्रस्य तात्पर्यमुक्तम् । उत्तरार्धेन चाष्टादशस्य ' अग्ने नय ' इत्यस्य तात्पर्यमुक्तम् ॥ १८ ॥

इति श्रीपाठकोपाह्वत्र्यम्बकतनूजनुःश्रीधरशास्त्रिकृता श्रीमदीशावास्योपनिषत्प्रकाशिकाव्याख्या बालबोधिनी समाप्ता ।



## ९ अद्वैतविशिष्टाद्वैतयोर्वैलक्षण्यस्य स्थलानि ।

| | |
|---|---|
| १ आत्मरूपमेकमेव अन्यन्नास्त्येव । | १ चिदचिद्रूपशरीरविशिष्ट आत्मैक एव । तच्छरीरादन्यत्किंचिन्नास्ति । |
| २ आत्मा निर्विशेषो निर्गुणश्च । | २ आत्मा सर्वज्ञत्वादिविशेषयुक्तः । अनन्तकल्याणगुणाश्रयः । तत्र हेयगुणा न सन्ति । |
| ३ आत्मा ज्ञानस्वरूपो न ज्ञानगुणवान् । अतएव तस्य न वस्तुतो ज्ञातृत्वम् । | ३ आत्मा ज्ञानस्वरूपोपि ज्ञानगुणाश्रयः । वस्तुत एव तस्य ज्ञातृत्वम् । |
| ४ आत्मा स्वरूपेण कूटस्थनित्यः । तेनैव रूपेणाद्वितीयश्च । | ४ परमात्मा स्वरूपेण कूटस्थनित्यः । चिदचिद्रूपशरीरविशिष्टरूपेण तु परिणामिनित्यः। विशिष्टरूपेणैवाद्वितीयः । |
| ५ परमात्मन एव मायोपाधिकमीश्वरत्वमविद्योपाधिकं जीवत्वम् । जडं तु प्रातिभासिकं मिथ्यैवेत्येकमेव तत्त्वम् । | ५ परमात्मैवेश्वरः । तच्छरीरभूतो जीववर्गो जडवर्गश्च । ततो भिन्न एवेति । चिदचिदीश्वररूपं तत्त्वत्रयम् । |
| ६ परमात्मनः सकाशादभिन्नापि भिन्नेव त्रिगुणा परमात्मशक्तिरज्ञानादिपदवाच्या तदुपहितः परमात्मा जगतो मूलप्रकृतिः । | ६ परमात्मनः सकाशाद्वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानं जगतो मूलप्रकृतिः । |
| ७ अस्मिन्मते विवर्तवादः । अज्ञानेन परमात्मन्येवेदं जगद्भासत इत्येवंरूपः । अत्र रज्जुसर्पदृष्टान्तः । | ७ अस्मिन्मते परिणामवादः प्रधानमेवान्तर्यामीश्वरसांनिध्याज्जगदाकारेण परिणमत इतिरूपः । अत्र पयोदधिदृष्टान्तः । |
| ८ परमात्मविवर्तभूतं प्रातिभासिकमिदं जगन्मिथ्यैव । | ८ प्रधानपरिणामभूतं चेदं जगत्सत्यमेव । |
| ९ अत्र मतेऽनिर्वचनीयख्यातिः । अनिर्वचनीयं चेदं जगदज्ञानदोषेण भासत इतिरूपा । | ९ अत्र मते सत्ख्यातिः । वस्तुतः सत्यमेव जगत्प्रतीयत इतिरूपा । |
| १० शुक्तिरजतस्थले स्वप्नादौ चानिर्वचनीया एवार्था भासन्ते । | १० शुक्तिरजतस्थले स्वप्नादौ च सत्या एवार्थाः प्रतीयन्ते । |
| ११ तत्त्वमस्यादिशास्त्रमपि जगदन्तर्गतत्वादसत्यमेव । तथापि तत्त्वज्ञानसाधनं भवत्येव । स्वाप्नपदार्थवत् । | ११ तत्त्वमस्यादिशास्त्रं सत्यमेवात एव तत्त्वज्ञानसाधकम् । |
| १२ प्रमाणानि षट् । प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्ध्याख्यानि । | १२ प्रमाणानि त्रीणि । प्रत्यक्षानुमानागमरूपाणि । |
| १३ परमात्मनोऽभिन्ना जीवाः । तेषां परमात्मवदेव ज्ञानस्वरूपत्वं नतु वस्तुतो ज्ञानाश्रयत्वं किन्त्वन्तःकरणोपाधिकं ज्ञातृत्वम् । | १३ जीवाः परमात्मनः सकाशाद्भिन्नास्तच्छरीरभूता अपि ज्ञानस्वरूपा ज्ञानगुणकाश्चेति तेषां वस्तुत एव ज्ञातृत्वम् । |
| १४ जीवो व्यापकः । | १४ जीवोणुरूपः । |
| १५ जीवो ब्रह्मस्वरूपत्वादेक एव । तदनेकत्वं त्वौपाधिकम् । | १५ जीवा वस्तुत एव नानाविधाः । जीवाद्वैतं तु प्रकाराद्वैतम् । |
| १६ साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा । | १६ कर्मस्वरूपज्ञानानन्तरं ब्रह्मजिज्ञासा । |

१७ तत्त्वमस्यादिमहावाक्यैरात्मसाक्षात्कारेऽविद्यानिवृत्त्या शरीरसत्त्वेपि जीवद्दशायां मुक्तिः ।

१८ प्रारब्धकर्मणां भोगेन क्षये शरीरत्यागे स्वस्वरूपेवास्थितिरूपा विदेहमुक्तिः ।

१९ मुक्तौ जीवब्रह्मणोर्भेदो नास्ति ।

२० मुक्तावस्थायां न लेशतोपि दुःखं न सुखं भवति ।

१७ तत्त्वमस्यादिमहावाक्यजन्योपासनार्द्ध्येन परमात्मा प्रसन्नो भवति । तथापि यावच्छरीरं सुखदुःखानुभवावश्यकत्वान्न जीवद्दशायां मुक्तिः ।

१८ प्रारब्धकर्मक्षये लौकिकशरीरत्यागे दिव्यदेहप्राप्त्या परमात्मना सह परमं साम्यं भवति । इयमेवास्मिन्मते मुक्तिः ।

१९ मुक्तावपि जीवब्रह्मणोर्भेदोस्ति ।

२० मुक्तावस्थायां दुःखलेशेनाभिन्नं सुखाधिक्यमनुभूयते ।

---



